॥ श्रीः ॥

चौखम्बा सुरभारतीय ग्रन्थमाला
५८



व्याकरणाचार्यपरीक्षोपयोगी —

# प्रबन्धसङ्ग्रहः

निबन्धकारः

**डॉ० ब्रह्मानन्द त्रिपाठी**

साहित्य-आयुर्वेद-ज्यौतिष-आचार्य

एम. ए., पी-एच्. डी., डी. एस-सी. ए-वाइ.




**चौखम्बा सुरभारती प्रकाशन**

वाराणसी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

५८

व्याकरणाचार्यपरीक्षोपयोगी—

# प्रबन्धसङ्ग्रहः

निबन्धकारः—

डॉ० ब्रह्मानन्द त्रिपाठी

साहित्य-आयुर्वेद-आचार्य

एम. ए., पी-एच. डी., डी. एस-सी. एवाइ.




चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ५५३५७



चतुर्थ संस्करण १९८८





अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

दूरभाष : २३६३९१

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

# आमुखम्

मान्याः ! गद्यगहनविचरणलब्धपाटवाः प्रेक्षावन्तः पञ्चाननाः !! सुविदितमेव तत्रभवतां भवतां यद् व्याकरणशास्त्रं सम्पूर्णमपि शब्दजातं संस्कृत्य स्थाने विद्वद्भ्य उपायनीकरोति । तस्य सम्यक्प्रयोगः काव्यरचनासु, गद्यलेखने, सम्भाषणादौ च सुधियां वैदुषीं सभाजयति । यद्यपि लोके प्रसिद्धिरस्ति यत् कर्णकटुशब्दैः खेदयन्ति वैयाकरणास्तदुपदेशश्रवणबद्धादरान् पण्डितान् बटूंश्च । तत् केवलं तेषां शब्दप्रयोगप्रकारविडम्बनामेव सूचयति नान्यत् किञ्चिदपि । शास्त्रान्तरज्ञानवान् वैयाकरणस्तु शब्दसाधुत्व-प्रदर्शनपूर्वकं तेषां प्रसङ्गानुकूलप्रयोगान् विधाय विदुषां सामाजिकानां च चेतस्सु कामपि कमनीयतां कलयति ।

अद्य मया व्याकरणाचार्य-परीक्षोपयोगि-प्रबन्धसङ्ग्रह-प्रारिप्साकामेन कतिपयव्याकरणसम्बन्धिप्रबन्धपुस्तकान्यालोचितानि, तेषु प्रायो व्याकरणग्रन्थिग्रथिता, दीर्घदीर्घतरसमासमाश्लिष्टकलेवराः पाञ्चालीरीतिनीतिपरामृष्टकायाः प्रबन्धा एव समन्तादवलोकिताः । ये साम्प्रतिकव्याकरणाचार्याणामपि शिरसामान्दोलने कारणतां यान्ति । अस्मिन् हिन्दीभाषाप्रधाने युगे साहित्य-व्याकरणन्यायप्रभृतयो विषया अपि यत्र हिन्दीभाषायां पाठ्यन्ते, तत्रैव छात्राश्च सादरम् अनुरज्यन्ते । अनया पद्धत्या पठन-पाठनक्षेत्रे महत्परिवर्तनं समायातम् । साम्प्रतिकाः परीक्षार्थिनः पूर्वं परीक्षोपयोगिविषयं हिन्दीभाषायां हृदयङ्गमं विधाय तदनु तं संस्कृते परिणमयन्ति, अतः प्रबन्धस्य भाषा तेषां कृते कीदृशी भवितव्येति जानन्ति एव सर्वे पाठनतत्पराः सुधीजुषः । एवमादि निखिलं विचार्य महत्त्वपूर्णानामपि विषयाणां विषये मया यावद्बुद्धिबलोदयं सरसा सरला च देववाणी प्रबन्धकर्मणि प्रयुक्ता ।

सम्प्रति महाविद्यालयेषु विश्वविद्यालयेषु मुख्यतः संस्कृतविश्वविद्यालयेषु च व्याकरणशास्त्रीयप्रबन्धाः परीक्षासु निर्धारिताः किन्तु परीक्षार्थिनस्तान् प्रबन्धान् यथायथं निबद्धुं न पारयन्तीति निश्चित्य मया सुप्रसिद्धाः परीक्षकप्रिया प्रबन्धा एव अत्र निबद्धाः । इमे प्रतिवर्षं परीक्षार्थिभ्यः पूर्णां सफलतां प्रदातुं कामं समर्थाः सम्भविष्यन्तीति ममैष द्रढीयान् विश्वासः ।

इतः पूर्वं चौखम्भासुरभारतीतः प्रकाशितः, 'प्रस्तावरत्नाकरः' प्रबन्धग्रन्थो मया विरच्य प्राकाश्यपदवीमुपनीतः। सोऽयं विद्वद्भिः प्रशंसितः सच्छात्रैरादृतः सन् प्रवेशिकापरीक्षात आरभ्य शात्रि ( बी० ए० ) परीक्षां यावत् परीक्षार्थिभ्यो महत् साहाय्यं वितरन् स्थाने समुज्जृम्भत इति, नः प्रमोदावसरः। अतश्छात्रा भूयो भूयोऽनुरुध्यन्ते यत् ते प्रारम्भिकप्रबन्धलेखनपाटवप्राप्त्यर्थं प्रस्तावरत्नाकरम् अनुसरेयुः।

**आभारः**—कुलपरम्पराऽऽगतां निसर्गोज्ज्वलां साहित्यशास्त्रधुरं समुद्वहतो गुरुप्रवरान् खिस्तेकुलमुक्तामणीन् पण्डितश्रीबटुकनाथशास्त्रि-महोदयान् सादरं नौमि, यतो मया साहित्यविषयकं ज्ञानमधिगतम्। सहैव सर्वतन्त्रस्वतन्त्रान् नागपुराभिजनान् परममाहेश्वरान् श्रीमतो वसन्तत्र्यम्बकशेवडे-महाशयान् सश्रद्धं प्रणमामि। यैर्मदीया व्याकरणविषयिणी दृगुन्मीलिता, प्रणुन्नश्चायञ्जनः परीक्षोपयोगिप्रबन्धलेखनकर्मणि। अतस्तेषां तेषामधमर्णभावं विनतकन्धरश्चिराय वहन् मनसि सन्तोषपोषं भावये।

प्रसङ्गेऽस्मिन् वाराणसेय-चौखम्बा-सुरभारती-प्रकाशन-परिवारः साधुवादार्हः। यः समये-समये परीक्षार्थिच्छात्राणां हिताय एवंविधानां निबन्धानां प्रकाशनाय रात्रिन्दिवं बद्धपरिकरस्तिष्ठति।

बद्धाञ्जलिः प्रार्थये यद् व्याकरणशास्त्रधुरीणा गुणगृह्या विपश्चितः पुरुषस्वभाव-सुलभान् दोषान् विस्मार्य, शीशकाक्षरसंयोजकानां प्रमादजन्यस्खलनानि च अविगणय्य लेखकस्य प्रयासान् सफलयिष्यन्तीति। पर्यन्ते—

दृष्टिदोषात् प्रमादात् वा प्रबन्धे स्खलनं क्वचित्।
तत् संशोध्य बुधाः सारं गृह्णन्त्विति निवेदनम्॥

वाराणस्याम्
चैत्रशुक्लप्रतिपदि २०३८ वि०

विद्वद्विधेयः—
डॉ० ब्रह्मानन्द त्रिपाठी

श्रीः

# प्रबन्धसंग्रहः

## मङ्गलाचरणम्

शब्दानुशासनं सर्वं पाणिनिर्लब्धवान् यतः ।
तं प्रणम्य शिवं साम्बं प्रबन्धस्तन्यतेऽधुना ॥ १ ॥
वैयाकरणमाश्रित्य प्रबन्धानां सुसङ्ग्रहः ।
कृतश्छात्रप्रबोधाय ब्रह्मानन्दत्रिपाठिना ॥ २ ॥

## व्याकरणशास्त्रम्--शब्दानुशासनं वा

विदितचरमेव इदं सर्वेषां गीर्वाणभाषाऽध्ययनरसिकानां, यद् व्याकरणशास्त्रं विद्वत्समाजे कीदृशं गौरवं भजतीति, समेषां दर्शनानां काव्यनाटकादीनां तथा आयुर्वेद–ज्यौतिषप्रभृतिशास्त्राणामपि सम्यग् ज्ञानार्थं व्याकरणशास्त्रज्ञानं नितान्तम् आवश्यकम् । जागर्ति च कस्यचिदभियुक्तस्य वचनमिदम् **'अव्याकरणमधीतं भिन्नद्रोण्या तरङ्गिणीतरणम् । भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम्'** । सुस्पष्टमिदं पद्यम् ।

अपरञ्च—'यद्यपि बहुनाधीषे तदपि पठ पुत्र ! व्याकरणम् ।'

तदिदं व्याकरणं शास्त्रं गीर्वाणभाषायां न केवलं शब्दसाधुत्वमात्रबोधकं किन्तु दर्शनपदवीं प्रापितं मोक्षहेतुभूतं जोघुष्यते । तथा च उक्तं हरिणा—'इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् । इयं सा मोक्षमाणामामजिह्मा राजपद्धतिः ॥' उक्तञ्च भगवता पतञ्जलिनाऽपि—'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति' महाभाष्ये ।

तत्र 'व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेन, इति वि+आङ्पूर्वकात् कृधातोः 'करणाधिकरणयोश्च' ३।३।११७। इति सूत्रेण करणे ल्युटि, व्याकरणशब्दो निष्पद्यते । एतेन शब्दसाधुत्वबोधसाधनं यत् शास्त्रं

तदेव व्याकरणमिति निगद्यते । 'तस्मात् शास्त्रं प्रमाणं ते कार्याकार्य-व्यवस्थितौ' । इति भगवदुक्त्या सर्वत्र कार्याकार्यव्यवस्थितौ साधुत्वाऽ-साधुत्वनिर्णये शास्त्रमेव प्रमाणत्वेन स्वीक्रियते ।

व्याकरणं शब्दानुशासनञ्च इति शब्दौ पर्यायभूतौ वर्तेते । शब्दानु-शासनपदेन व्याकरणस्यैव अर्थः सुलभतया बोध्यते, तथा हि महाभाष्यस्य प्रारम्भे भगवान् पतञ्जलिः प्राह-'**अथ शब्दानुशासनम्**' शब्दानुशासनं नाम शास्त्रम् अधिकृतं वेदितव्यमिति । तत्र कस्य व्याकरणशास्त्रम् इति संज्ञा, इति जिज्ञासायां सूत्र-वार्तिकयोरेव प्रायः ग्रहणमाम्नातम् । भाष्य-वृत्तिप्रभृतयो ग्रन्थास्तु अनयोः विवरणपरा वर्तन्ते । क्वचित् भाष्य-कारस्य इष्टयः प्रयोगाश्चापि प्रमाणत्वेन स्वीक्रियन्ते । यथा भट्टोजि-दीक्षिताः बहुव्रीहिप्रकरणे 'ठक्छसोश्च' इति वार्तिके आहुः । एतद्वार्तिकं '**एकतद्धिते च**' इति सूत्रञ्च न कर्तव्यम् । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्टया गतार्थत्वात् ।

तत्र '**यथोत्तरं मुनीनां प्रामाण्यम्**' इत्युक्त्या अन्ततो भगवतो भाष्य-कारस्य वचनेनैव साधुत्वनिर्णयो भवति । प्राचीनास्तु अस्याः परिभा-षायाः उत्तरोत्तरमुनिवचने पूर्वपूर्वमुनेः तात्पर्यम् इत्यर्थः, न उत्तरोत्तर-मुन्यपेक्षया पूर्वपूर्वमुनेरप्रामाण्यम् इति अर्थं कल्पयन्ति । यथा - अजन्त-पुंल्लिङ्गप्रकरणे श्रीमद्भट्टोजिदीक्षिताः प्राहुः—'भाष्यकारस्तु त्वकत्-पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वा एतत् सूत्रं ( न बहुव्रीहौ १।१।२९ ) प्रत्याचख्यौ 'यथोत्तरं मुनीनां प्रामाण्यम् ।' इति ।

पाणिनीयसूत्राणि, वार्तिकानि, भाष्यञ्च इत्येषा त्रयी, आकरशब्देन व्यवह्रियते । क्वचित् कैयटवचनस्यापि आकरशब्देन ग्रहणं दृश्यते तत्र पाणिनीयसूत्राण्येव व्याकरणशास्त्रस्य मूलभूतानि । तत्र उक्तानुक्त-दुरुक्तानां चिन्तार्थं वार्तिकानि प्रवर्तन्ते । तथा चोक्तम्—'उक्तानुक्त-दुरुक्तानां चिन्ता यत्र प्रवर्तते । तद्वाक्यं वार्तिकं प्राहुर्वार्तिकज्ञा विचक्षणाः' ।। भाष्यन्तु अनयोर्विवरणपरम् उदाहरणप्रत्युदाहरणप्रदर्श-कञ्च । तत्र यद्यपि —

'इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः' ।। इति ।।

अन्येषामपि व्याकरणानि सन्ति, तथापि वैदिकलौकिकोभयसङ्ग्राहकत्वात् पाणिनीयं व्याकरणमेव सर्वैराद्रियते । 'असौ नवव्याकरणार्थवेत्ता' । इति, हनूमन्तमुद्दिश्य महर्षिवाल्मीकेः वचनेन तत्काले नवव्याकरणान्यासन्, इति अनुमीयते । तत्र सर्वेषामपि शास्त्राणां मूलभूतानि सूत्राणि एव दृश्यन्ते । यथा—व्याकरणशास्त्रे पाणिनिप्रभृतिभिर्विरचितानि सूत्राणि, न्यायशास्त्रे गौतमनिबद्धानि सूत्राणि, वैशेषिकशास्त्रे कणादकृतानि सूत्राणि, साङ्ख्यशास्त्रे कपिलमुनिग्रथितानि सूत्राणि प्रसिद्धानि । **'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयो.'** ४ । ३ । ११० । **'कर्मन्दकृशाश्वादिनिः'** ४।३।१११ । इति पाणिनिसूत्राभ्यां ज्ञायते, यत् पाणिनिकाले नटसूत्राणि, भिक्षुसूत्राणि तेषाम् अध्येतारश्चासन्निति । तत्र सङ्क्षिप्ततमशब्दैः सिद्धान्तप्रतिपादकं वाक्यं सूत्रमिति व्यवह्रियते । तथा चोक्तम्—

**'अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः'** ।। सूत्रेषु सङ्क्षेपस्य अभ्यर्हितत्वात् जागर्ति वैयाकरणनिकाये आभाणकः—'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इति । स्वल्पाक्षरत्वात् सूत्राणि स्वल्पेनैव परिश्रमेण कण्ठस्थीकर्तुं प्रभवन्ति शिशुबुद्धयोऽपि का कथा च इतरेषाम् ?

सूत्राणां सम्यग्ज्ञानार्थं वार्तिकानामपि अपेक्षा वर्तते । वार्तिकानि यद्यपि प्रायः कात्यायनविरचितानि तथापि अन्येषामपि दृश्यन्ते । तथा च महाभाष्ये—'सौनागाः पठन्ति,' 'भारद्वाजीयाः पठन्ति' इत्यादिवचनैः अन्येषामपि वार्तिकानि सङ्गृहीतानि दृश्यन्ते । पूर्वं गुरुमुखादेव सूत्रवार्तिकार्थज्ञानं शिष्याणां भवतिस्म, कालान्तरे बुद्धेर्ह्रासात् सूत्रवार्तिकार्थवर्णनोदाहरणप्रत्युदाहरणप्रदर्शिकाः कुणिप्रभृतिभिर्विरचिताः वृत्तयो लब्धप्रसारा बभूवुः ।

अधुना समुपलब्धेषु वृत्तिग्रन्थेषु **वामनजयादित्यविरचिता काशिकावृत्तिः** प्राचीनतमा वरीवर्ति । कालान्तरेण बालानां सुकुमारबुद्धित्वात् सरलानां वृत्तिग्रन्थानामपि ज्ञानं दुष्करमासीत्, इति तद्विवरणार्थं

न्यासपदमञ्जरीप्रभृतयो व्याख्याग्रन्थाः जिनेन्द्रबुद्धि-हरदत्तप्रभृतिभिर्विरचिताः। तथा चोक्तं शिशुपालवधमहाकाव्ये—

'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा'॥

पाणिनीयसूत्राणां गौरवापादकं भगवता पतञ्जलिना विरचितं महाभाष्यं कामपि अनिर्वचनीयां प्रतिष्ठां बरीभर्ति। अधुना उपलभ्यमानेषु सर्वेषु भाष्यग्रन्थेषु पातञ्जलं महाभाष्यं प्राचीनतमम्। इदं सर्वतोभावेन अनुकुर्वाणाः शबरस्वामि-प्रशस्तपादप्रभृतयः तत्तच्छास्त्रेषु मूलभूतानि सूत्राणि विवरीतुं भाष्यग्रन्थान् प्राणैषुः। किन्तु तेषु कोऽपि भाष्यग्रन्थः पातञ्जलमहाभाष्यस्य कक्षाम् अधिरोढुं न क्षमः, इति ते केवलं भाष्यपदेन व्यवह्रियन्ते, पातञ्जलन्तु महाभाष्यपदेन गौरवमावहति। उक्तञ्च साभिमानं नागेशभट्टेन—'पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः।' पतञ्जलिनैव पाणिनिसूत्राणां गौरवं स्वव्याख्यानेन समुपबृंहितम्।

यद्यपि क्वचिद् भगवान् भाष्यकारः पाणिनीयसूत्राणां प्रत्याख्यानं करोति तथापि तत् प्रौढिवादमात्रम्। तथा च स स्वयमेवाऽऽह—'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयतिस्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेणेति'। 'सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिरिति च'।

भगवान् पतञ्जलिः शेषाऽवतारः, सहस्रभिर्मुखैः यवनिकयाऽन्तर्हितः शिष्येभ्यः समुपदिशतिस्म, इति श्रूयते, समीचीनं च एतत्। अन्यथा महाभाष्ये दृष्टानाम् एकाहेन कर्तुम् अशक्यानां 'तेन निर्वृत्तम्' ५।१।७९ इति सूत्रेण निष्पन्नानाम् आह्निकानां ग्रथनं लौकिकपुरुषाणां दुष्करमेव। भाष्यमिदं न सर्वेषु सूत्रेषूपलभ्यते। यत्र नोपलभ्यते तत्र गुरुमुखोद्गतः प्रवाद एवं प्रसृतो विद्यते, यद् अत्रत्यं भाष्यम् अजभक्षितमिति।

यद्यपि सर्वेषामेव भारतीयशास्त्राणां परमं प्रयोजनं मोक्ष एव,

तथापि तेषाम् अध्ययनस्य दृष्टप्रयोजनान्यपि सम्भवन्ति। तत्र व्याकरणशास्त्रस्य मोक्षप्रयोजनकत्वं वर्णितमेव। अधुना तदध्ययनस्य लौकिकानि प्रयोजनानि प्रदर्श्यन्ते। व्याकरणाध्ययनस्य प्रयोजनविषये भगवता पतञ्जलिना **'रक्षोहाऽऽगमलघ्वसन्देहाः प्रयोजनम्'**। इति तदध्ययनस्य प्रयोजनानि सविस्तरं प्रदर्शितानि सन्ति।

—: ० :—

## स्फोटसिद्धान्तः

तत्र शब्दगताः वर्णाः प्रत्येकं, मिलिताः वा, अर्थस्य वाचकाः, इति शङ्कायाम् एतद्द्वयमपि नैव सम्भवति। वर्णानां मध्ये प्रत्येकं वाचकत्वे घटशब्दे 'घ'-वर्णेनैव कम्बुग्रीवादिमदर्थस्य बोधे सति शेषाणां वर्णानां वैयर्थ्यम् आपद्येत। उच्चरितप्रध्वंसितानां वर्णानां मेलनमपि नैव सम्भवति। यदि एकस्मृतिगोचराः वर्णाः अर्थवाचकाः स्युरिति कल्प्येत, तर्हि तदपि न सम्भवति। येन क्रमेण वर्णाः उच्चारिताः तेनैव क्रमेण तेषां स्मरणं भवेदेव इति नैव वक्तुं शक्यते। दृश्यते च अनुभूतानां स्मरणस्य क्रमविपर्ययोऽपि। तेन सरः, रसः, नदी, दीन, इत्येतेषु शब्देषु क्रमविपर्यये सर्वथा भिन्नार्थबोधः सम्भवति। अतएव कल्प्यते यद् उच्चारितैर्वर्णैः स्फोटात्मकः नित्यः शब्द अभिव्यज्यत इति। तदुक्तं शेषकृष्णमहाभागैः स्फोटितत्त्वनिरूपणे—

**'न प्रत्येकं न मिलिता न चैकस्मृतिगोचराः।**
**अर्थस्य वाचका वर्णाः किन्तु स्फोटः स च त्रिधा'॥ इति॥**

तत्र वर्णस्फोटः, पदस्फोटः वाक्यस्फोटश्च इति त्रैविध्येऽपि पदस्फोटः वाक्यस्फोटश्च मुख्यौ, लोके पदवाक्ययोरेव अर्थबोधकत्वदर्शनात्।

तत्र परा-पश्यन्ती-मध्यमा-वैखरीरूपवाक्चतुष्टयमध्ये मध्यमा-

नादव्यङ्ग्यः। स्फोटात्मकः शब्दः अर्थबोधकः ब्रह्मरूपो नित्यश्च, स्फुटति अर्थः अस्मात् इति व्युत्पत्त्या यौगिकार्थसम्भवेऽपि स्फोटशब्दः पङ्कजादिशब्दवद् योगरूढः।

पद-स्फोटवाक्यस्फोटयोरपि वाक्यस्फोटः मुख्यः। लोके अन्ततः वाक्यस्यैव अर्थबोधकत्वात्। तथा चोक्तम्—'वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीति मतिर्मम'।

अत्र इयं तावत् शङ्का—यदि अयं स्फोटः ब्रह्मरूपो नित्यः एकश्च तर्हि अर्थबोधभेदो नैव दृश्येत। तत्समाधानं तावदित्थम्। यथा—मणिदर्पण-कृपाणादौ प्रतिबिम्बितं मुखं दीर्घवर्तुलत्वादिरूपेण भिन्नमिव लक्ष्यते, तथैव तैस्तैर्ध्वनिभिः अभिव्यङ्ग्यः स्फोटः उपाधिभेदाद् भिद्यत एव। तथा चोक्तं स्फोटतत्त्वनिरूपणे शेषकृष्णैः—

**'यथा मणिकृपाणादौ मुखमेकमनेकधा।**
**तथैव ध्वनिषु स्फोट एक एव विभिद्यते'॥**

तेन भिन्न-भिन्नवर्णैः अभिव्यक्तः स्फोटः उपाधिभेदभिन्नः घट-पटादि-रूपं भिन्न-भिन्नमर्थं बोधयति।

शब्दात्मकस्य वेदस्य नित्यत्वं स्वीकुर्वाणा मीमांसकाः, शब्दः नित्यः विभुश्च इति स्वीकुर्वन्ति। तन्मते तत्तच्छब्दव्यञ्जकाः ध्वनयः वायवो वा अनित्याः। तैरभिव्यक्तः शब्दस्तु नित्य एव, तेन तस्य देशतः कालतश्च व्यतिरेकाभावेऽपि यदा तत्तद्ध्वनिभिः तत्तद्वायुभिर्वा अभिव्यक्तिर्भवति तदैव अर्थबोधो भवति, न सर्वदा। अतः शब्दस्य नित्यत्वे विभुत्वे च सर्वदा शाब्दबोधापत्तिः निरस्ता। शब्दानां नित्यत्वम् इति विषये सोऽयं गकारः इति प्रत्यभिज्ञा तैः प्रमाणीक्रियते। यदि गकारस्य भेदः स्यात् तर्हि सोऽयं गकारः इति तदभेदावगाहिनी प्रत्यभिज्ञा नैव सम्भवति। तेन अनित्यैः ध्वनिभिः वायुभिः वा अभिव्यक्तानां नित्यानां वर्णानां मेलनसम्भवात् तेषाम् अर्थबोधकत्वे न कोऽपि दोषः। तदिदं मतम् आपातरमणीयमपि नैव प्रमाणपदवीमारोहति।

नित्यानामपि वर्णानां तत्तद्व्यञ्जकवायुभिः ध्वनिभिर्वा व्यवधाने

सति वर्णसमुदायात्मकः शब्दः नैव प्रत्यक्षः स्यात्, अतः नित्यानामपि वर्णानां मेलनाऽसम्भवात् प्रत्येकं वाचकत्वाभावात् शब्दनित्यत्वपक्षेऽपि अर्थबोधो नैव सम्भवति । तत्प्रतिपादितं स्फोटतत्त्वनिरूपणे शेषकृष्णैः–

**'नित्यानामपि वर्णानां तत्तद् व्यञ्जकवायुभिः ।**
**ध्वनिभिर्वा तिरोधाने न वर्णसमुदायधीः' ।।**

तथा च घटशब्दे घकारः, अकारः, टकारः अकारश्च इत्येते चत्वारो वर्णाः क्रमिकाः कम्बुग्रीवादिमदर्थस्य वाचका इति मीमांसकैरपि स्वीकरणीयम् । क्रमविपर्यये तदर्थस्य बोधः नैव भवितुं शक्यते । मीमांसकमते शब्दस्य नित्यत्वात् विभुत्वाच्च क्रमो नैव सम्भवति । उपलब्धिनिमित्तकोऽपि सः ( क्रमः ) तस्या उपलब्धेरेकत्वात् नैव सुलभः । तदुक्तं स्फोटतत्त्वनिरूपणे शेषकृष्णैः—

**'नित्यानाञ्च विभूनाञ्च क्रमो नास्त्येव वास्तवः ।**
**उपलब्धिनिमित्तश्चेत् सा चेदेका कुतः क्रमः' ।।**

किञ्च यदि सोऽयं 'गकारः' इति प्रत्यभिज्ञाबलाद् वर्णाः नित्याः, इति स्वीक्रियते तर्हि उत्पन्नो गकारः, नष्टो गकारः इति प्रतीतिबलात् तेषाम् अनित्यतापि सम्भवत्येव । तच्चोक्तं स्फोटतत्त्वनिरूपणे शेषकृष्णैः—

**'वर्णानां प्रत्यभिज्ञान-बलात् स्यान्नित्यता यदि ।**
**अनित्यतैव किं न स्यादुत्पादादिधियां बलात्' ।।**

अतः स्फोटस्वीकारं विना मीमांसकमतेनाऽपि अर्थबोधनिर्वाहाऽसम्भवात् स आवश्यकः ।

नैय्यायिकाः पूर्व-पूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभवाद् एव शाब्दबोधमामनन्ति । तेन वर्णानाम् उच्चरित-प्रध्वसितत्वेऽपि तदनुभवजन्यसंस्काराणां विद्यमानत्वेन तत्सहितचरमवर्णानुभवात् शाब्दबोधोपपत्तौ तावद्वर्णाभिव्यङ्ग्यः वैयाकरणाभिमतः स्फोटो नावश्यकः, इति सङ्गिरन्ते । किन्तु येन क्रमेण अनुभवो भवति तेनैव क्रमेण तज्जनिताः संस्कारा उत्पद्यन्ते, इत्यत्र मानाभावेन सर-रस,

नदी-दीन इत्यत्र संस्काराणां विपर्यासे सति सर-शब्दात् रसविषयक-शाब्दबोधः, नदीशब्दात् दीनविषयक-शाब्दबोध आपद्येत, अतो नैयायिकमतेऽपि स्फोटस्वीकारः परमावश्यकः ।

—:०:—

## शब्दशक्तिः

'पदज्ञानन्तु करणं द्वारन्तत्र पदार्थधीः। शब्दबोधः फलन्तत्र शक्तिधीः सहकारिणी' ।। कारिकावल्यां शब्दखण्डे । शाब्दबोधे पदज्ञानं कारणं भवति । पदज्ञानजन्यपदार्थस्मरणं व्यापारः=शाब्दबोधः फलं भवति । पदज्ञानजन्यपदार्थस्मरणे शक्तिज्ञानं सहकारिकारणं भवति । इदन्तावत् सर्वैरेव अनुभूयते यत् अपरिचितभाषायाः पदानां सत्यपि श्रवणानुभवे शाब्दबोधो न जायते । तत्र पदज्ञानस्य विद्यमानत्वेऽपि तत्पदविषयकशक्तिज्ञानस्य सहकारिकारणस्य विरहात्, पदार्थस्मरण-रूपव्यापाराभावात् शाब्दबोधात्मकं फलं नोत्पद्यते, अतः शाब्दबोधार्थं शक्तिज्ञानं सुतरामपेक्ष्यते ।

तत्र शक्तिः कः पदार्थः ?—इति विचारे जरन्नैयायिकाः ईश्वरेच्छैव शक्तिः, नवीननैयायिकास्तु इच्छैव शक्तिः, इति स्वीकुर्वन्ति । अस्मात्पदादयमर्थो बोद्धव्यः, इति अर्थविशेष्यिका पदप्रकारिका, इदं पदम् अर्थं बोधयतु, इति पदविशेष्यिका अर्थप्रकारिका । एवं द्विविधापि ईश्वरेच्छा शक्तिपदवीम् उपयाति, न च एवंविधायाः ईश्वरेच्छायाः शक्तिरूपत्वे पित्रादिसङ्केतितदेवदत्तादिनामसु तादृशेश्वरेच्छादिरूप शक्त्यभावात् ततो बोधो नोत्पद्येत, इति वाच्यम् । 'एकादशे वा अहनि पिता नाम कुर्यात्' इति शास्त्रवचनेन तत्रापि ईश्वरेच्छारूपशक्तेः सत्त्वात्, न च ईश्वरेच्छायाः शक्तित्वे पाणिन्यादिसङ्केतितनदीवृ-

द्धयादिपदेषु, ईश्वरेच्छारूपशक्तेरभावात् ततः शाब्दबोधो न स्यात् इति वाच्यम्, इष्टत्वात्, तत्र शक्तिभ्रमादेव शाब्दबोधः। एतादृशानुपपत्ति-परिहाराय नवीननैयायिकाः केवलमिच्छारूपां शक्तिं स्वीकुर्वन्ति, तस्याः नदीवृद्धयादिपदेष्वपि सम्भवात्। तत्र प्रमात्मकशक्तिज्ञानादेव शाब्दबोधसम्भवे शक्तिभ्रमस्वीकारो नाऽवश्यकः, तत्र अर्थशक्त्यनुकूल-पद-पदार्थसम्बन्धो वृत्तिः, इति नियमेन शक्त्यात्मकवृत्तेः सम्बन्ध-स्वरूपत्वं नितान्तमावश्यकम्। सम्बन्धस्तावत् सम्बन्धिभ्यां भिन्नः द्विष्ठश्च भवति। यथा—घटवद् भूतलम्, इत्यत्र घट-भूतलयोः संयोगः सम्बन्धः ताभ्यां भिन्नः घटभूतलोभयनिष्ठश्च भवति। सम्बन्धास्तावत् संयोग-समवाय-कालिकप्रभृतयः प्रसिद्धाः। इच्छायाः सम्बन्धत्वे माना-भावेन तस्याः पदपदार्थसम्बन्धरूपं वृत्तित्वमेव न सम्भवति। अतः ईश्वरेच्छारूपा इच्छारूपा वा शक्तिः, इति मतं न प्रमाणपदवीमधि-रोहति।

वैयाकरणाः पद-पदार्थयोः वाच्य-वाचकभावरूपः सम्बन्धः शक्तिः, इत्युररीकुर्वन्ति। पदपदार्थयोः वाच्यवाचकभावसम्बन्धस्य शक्तिरूपत्व-स्वीकारे न अनुपपत्तिर्भवति। तद्यथा—

'शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः॥'

इत्यभियुक्तोक्त्या व्यवहारादिभिः शक्तिग्रहो भवति। यथा—प्रयोजकप्रयोज्यवृद्धयोः 'गामानय' इत्यादिशाब्दव्यवहारं दृष्ट्वा समी-पस्थः बालः गोपदस्य गवि शक्तिं गृह्णाति। 'भू-सत्तायाम्,' 'कर्तरि कृत्,' भूधातोः सत्तारूपे अर्थे कृत्प्रत्ययस्य च कर्तरि शक्तिग्रहो भवति। 'गोसदृशो गवयः' इत्यादिस्थलेषु उपमानेन गवयपदस्य गवये शक्ति-ग्रहस्तु सुप्रसिद्धः। 'यवमयः चरुर्भवति' इत्यत्र 'यदा अन्या ओषधयो म्लायन्ते, अथैते मोदमानास्तिष्ठन्ति' इति वाक्यशेषात् यवपदस्य दीर्घशूके शक्तिग्रहः। 'पचति' इत्यस्य पाकं करोति इति विवरणात् पचधातोः पाके तिप् प्रत्ययस्य कर्तरि शक्तिग्रहो भवति। 'इह सहकार-तरौ मधुरं पिको रौति' इत्यत्र सहकारादिपदसान्निध्यात् पिकशब्दस्य कोकिले सुकरः शक्तिग्रहः।

सा च शक्तिः वैयाकरणमते त्रिविधा—१. योगः, २. रूढिः, ३. योगरूढिश्चेति। तत्र अवयवशक्तिः योगः, यथा—पाचकादिपदे पच-धातोः पाकः अर्थः, ण्वुल् प्रत्ययस्य च कर्त्ता अर्थः, तेन पाचकपदं पाककर्तृरूपमर्थमभिधत्ते। समुदायशक्तिः रूढिः। यथा—गो-मण्डपादिपदे गोपदं समुदायशक्त्या सास्नादिमर्थस्य वाचकम्। मण्डपपदञ्च जनाश्रयरूपस्य अर्थस्य वाचकम्। यत्र अवयवशक्तिविषये समुदायशक्तिरपि वर्तते तत्र योगरूढिः। यथा—पङ्कजादिपदेषु, पङ्कजपदम् अवयवशक्त्या पङ्कजनिकर्तृरूपमर्थमभिधत्ते, रूढ्या च पद्मरूपमर्थम्। तेन तत्र पङ्कजनिकर्त्रभिन्नं पद्मम् इति बोधो भवति।

नैयायिकादयः—'गङ्गायां घोषः' इत्यादिस्थलेषु प्रवाहरूपशक्यार्थबाधात् गङ्गापदस्य तीरे लक्षणां मन्यन्ते। वैयाकरणास्तु लक्षणां न स्वीकुर्वन्ति। ते पदस्य प्रसिद्धशक्तिम् अप्रसिद्धशक्तिञ्च स्वीकृत्य तत्र अप्रसिद्धशक्तौ लक्षणामन्तर्भावयन्ति। इयम् अप्रसिद्धशक्तिः सहृदयवेद्यत्वात् फलविशेषे एव सम्भवति।

**समासशक्तिः**—मीमांसकाः नैयायिकाश्च समासे लक्षणया एव बोधनिर्वाहात् समासशक्तिं गौरवात् न स्वीकुर्वन्ति। यथा—**'राजपुरुषः'** इति तत्पुरुषसमासे राजपदस्य राजसम्बन्धिनि लक्षणा। तस्य पुरुषपदार्थेन पुरुषेण सह अभेदान्वये राजसम्बन्ध्यभिन्नः पुरुष, इति बोधः।

**'उपकुम्भम्'** इत्यव्ययीभावे कुम्भपदस्य कुम्भसम्बन्धिनि लक्षणा। तस्य उपपदार्थेन समीपेन अभेदान्वयः। तेन 'उपकुम्भमि'त्यत्र कुम्भसम्बन्ध्यभिन्न समीपम् इति बोधः। **'चित्रगुः'** इति बहुव्रीहौ यदि एकदेशान्वयः स्वीक्रियते तर्हि गोपदस्य गोस्वामिनि लक्षणा। गवि चित्रपदार्थस्य अभेदान्वयः। यथा—चित्राभिन्नगोस्वामि इति च बोधः। यदि एकदेशान्वयः न स्वीक्रियते तर्हि गोपदस्य चित्रगोस्वामिनि लक्षणा। अत्र चित्रगोपदं चित्रगोस्वामिविषयकबोधजनकं भवतु इत्याकारकवक्त्रिच्छारूपतात्पर्यग्राहकम्।

नैयायिका मीमांसकाश्च नीलोत्पलमित्यादिकर्मधारये लक्षणां न स्वीकुर्वन्ति। यत्र लक्षणां विनैव नीलपदार्थस्य नीलस्य उत्पलपदार्थेन

उत्पलेन अभेदान्वये शक्यैव नीलाभिन्नम् उत्पलम् इति शाब्दबोधो निर्वहति। मीमांसका **धवखदिरौ** इत्यादिद्वन्द्वे साहित्यलक्षणां स्वीकुर्वन्ति। नैयायिकास्तु द्वन्द्वे लक्षणां नैवाङ्गीकुर्वन्ति। किन्तु समासे विशिष्टशक्तिरस्ति, इति वैयाकरणमतमेव समीचीनम्। समासे विशिष्टशक्त्यस्वीकारे तत्र पदानां प्रत्येकमर्थवत्वेऽपि समुदायस्य अर्थवत्वाभावात् तस्य प्रातिपदिकसंज्ञा एव न स्यात्। न च '**कृत्तद्धितसमासाश्च**' इति सूत्रेण तस्य प्रातिपदिकसंज्ञा स्यादिति शङ्कनीयम्। तस्य नियमार्थत्वात्। तेन नैयायिक-मीमांसकमते समासस्य प्रातिपदिकत्वाभावात् ततः सुबुत्पत्तिः नैव प्राप्नोति।

**लकारशक्तिः**—तत्र नैयायिकाः आख्यातस्य ( तिबादिप्रत्ययस्य ) कृतावेव शक्ति स्वीकुर्वन्ति। 'लः कर्तरि च भावे चाकर्मकेभ्यः' इति सूत्रेण कर्त्तरि लकारस्य विधानेऽपि कृतिमतः कर्तुः शक्यत्वे अनेकासां कृतीनां शक्यतावच्छेदकत्वे गौरवम्। तदपेक्षया लकारस्य कृतौ जातिरूपं कृतित्वं शक्यतावच्छेदकम्, इति लाघवम्। किञ्च देवदत्तः ग्रामं गच्छतीत्यत्र प्रथमान्तदेवदत्तपदेनैव आश्रयरूपकर्तुर्लाभात्, तस्य अन्यलभ्यत्वात् तत्र लकारस्य शक्तिर्नोचिता। '**अनन्यलभ्यो हि शब्दार्थः**' इति न्यायात्। एतन्नैयायिकमतं न समञ्जसं प्रतिभाति। तत्स्वीकारे अभिहितानभिहितव्यवस्थायाः असम्भवात् विभक्तिव्यवस्था न सम्भवति। तथाहि—'**देवदत्तः ग्रामं गच्छति**' इत्यत्र लकारस्य (तिबादिप्रत्ययस्य) कृतौ शक्तिस्वीकारे कर्तुरनभिहितत्वेन "**कर्तृकरणयोस्तृतीया**' इति सूत्रेण देवदत्तपदात् तृतीयाया आपत्तिः। किञ्च '**लः कर्मणि**…' इत्यादि सूत्रे '**कर्तरि कृत्**' इति सूत्रात् कर्तरीति पदमनुवृत्तम्। नैयायिकैरपि '**कर्तरि कृत्**' इति सूत्रे कर्तरीति पदं कर्तृरूपार्थकबोधकमेव स्वीक्रियते, तस्यैव '**लः कर्मणि**…' इत्यादिसूत्रे अनुवृत्तस्य कृतिबोधकत्वस्वीकारः '**अर्धजरतीयं न्यायम्**' अनुकुर्वाणः न कस्यापि सम्मतो भविष्यति।

—:०:—

## शाब्दबोधः

> 'आसत्तिर्योग्यताऽऽकाङ्क्षा तात्पर्यज्ञानमिष्यते ।
> कारणं सन्निधानन्तु पदस्यासत्तिरुच्यते ।।
> पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ।
> यत्पदेन विना यस्या ननु भावकता भवेत् ।।
> आकाङ्क्षा वक्तुरिच्छा च तात्पर्यं परिकीर्तितम्' ।
> —कारिकावल्यां शब्दखण्डे ।।

शाब्दबोधे आकाङ्क्षाज्ञानं, योग्यताज्ञानम्, आसत्तिज्ञानम, तात्पर्यज्ञानञ्च कारणम् । येन पदेन विना यत्पदस्य अन्वयबोधाजनकत्वं तेन पदेन सह तस्य आकाङ्क्षा, क्रियापदेन विना कारकपदं कारकपदेन विना क्रियापदञ्च अन्वयबोधं न प्रकटीकरोति । अतः क्रियापद-कारकपदयोः परस्परम् आकाङ्क्षा । आकाङ्क्षाज्ञानस्य शाब्दबोधे कारणत्वात् गोः, अश्वः, पुरुषः, हस्ती इत्यादौ आकाङ्क्षाविरहात् न शाब्दबोधः ।

**अर्थाबाधो योग्यता**—'वह्निना सिञ्चति' इत्यत्र सेके वह्निकरणकत्वस्य बाधात्, योग्यताविरहात् न शाब्दबोधः । पदानामविलम्बेनोच्चारणम् **आसक्तिः** । प्रहरे-प्रहरे असहोच्चारितेषु शब्देषु न शाब्दबोधः, आसत्तेरभावात् । शाब्दबोधे वक्त्रिच्छारूपतात्पर्यस्य ज्ञानमपि कारणं वर्वर्ति । यथा—भोजनप्रसङ्गे **सैन्धवमानय** इत्युक्तौ सैन्धवपदेन लवणस्यैव बोधः । यात्राप्रसङ्गे **सैन्धवमानय** इत्युक्तौ घोटकस्यैव बोधो भवति । ननु वेदानाम् अपौरुषेयत्वात् तत्र वक्त्रिच्छारूपतात्पर्यज्ञानं न सम्भवति, इति चेद् वेदानाम् ईश्वरकर्तृकत्वस्वीकारे तत्र ईश्वरीयतात्पर्यज्ञानम्, ईश्वरकर्तृकत्वाऽस्वीकारे तु अध्यापकस्य तात्पर्यज्ञानं कारणम् । शुकादिवाक्येषु शिक्षयितुः तात्पर्यज्ञानं कारणम् । तात्पर्यग्राहकाः तावन्मम्मटमते—

> 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
> अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।।

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः ॥'

पदार्थानां परस्परसंसर्गस्तु आकाङ्क्षावशाद् भासते। तदुक्तं व्युत्पत्तिवादप्रारम्भे गदाधरभट्टाचार्यैः—'शाब्दबोधे चैकपदार्थे अपरपदार्थसम्बन्धः संसर्गमर्यादया भासते' इति। पदानुपस्थितस्याप्यर्थस्य संसर्गतया भानं सम्भवत्येव। यथा—**तण्डुलम् आनय** इत्यत्र तण्डुलपदस्य तण्डुलरूपोऽर्थः, अम् प्रत्ययस्य कर्मत्वमर्थः, तण्डुलस्य निष्ठत्वसम्बन्धेन कर्मत्वे अन्वयः। आङ्पूर्वकनीधातोः **आनयनम्** अर्थः। कर्मत्वस्य निरूपकत्वसम्बधेन आनयने अन्वयः। आख्यातस्य (तिबादिप्रत्ययस्य ) कर्ता अर्थः, आनयनस्य कर्तरि अन्वयः। अत्र शिष्यबुद्धिवैशद्याय प्रथमादिविभक्तीनाम् अर्थाः सङ्क्षेपेण प्रदर्श्यन्ते—

'कर्ता कर्म च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥'

क्रियाजनकं कारकं, यस्य क्रियानिष्पत्तौ समुपयोगो भवति तस्य कारकमिति संज्ञा। कारकप्रकरणे अनभिहिताधिकारात् अनभिहिते एव कारके कर्मादिबोधिकाः द्वितीयादयो विभक्तयः भवन्ति। अभिहितेषु च कर्मादिषु 'प्रातिपदिकार्थमात्रे' प्रथमैव विभक्तिर्भवति। अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः भवति। यथा—'देवदत्तः गच्छति' इत्यत्र आख्यातेन देवदत्तस्य कर्तुरभिधानात् न तत्र तृतीया किन्तु प्रथमैव। 'हरिः सेव्यते' इत्यत्र कर्माख्यातेन हरेः कर्मणः अभिधानात् हरिशब्दात् न द्वितीया किन्तु प्रथमैव।

**विभक्तिर्द्विविधा**—१. कारकविभक्तिः, २. उपपदविभक्तिश्च। तत्र क्रियासम्बन्धनिमित्तिका विभक्तिः कारकविभक्तिः। पदान्तरसम्बन्धनिमित्तिका विभक्तिश्च उपपदविभक्तिः। तत्र **हरये नमः** इत्यादिस्थलेषु नमःपदसम्बन्धनिमित्तिका चतुर्थी। यत्र उपपदविभक्तिः कारकविभक्तिश्च द्वयोरपि प्राप्तिः तत्र **'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'** इति नियमेन उपपदविभक्तिं बाधयित्वा कारकविभक्तिर्भवति। यथा—**'नारायणं नमस्कृत्य'** इत्यत्र चतुर्थी बाधयित्वा **'कर्मणि द्वितीया'** भवति।

**कर्ता**—"**कर्तृकरणयोस्तृतीया**' इति सूत्रेण अनभिहिते कर्तरि करणे च तृतीयाविभक्तिर्भवति। यथा—'रामेण बाणेन हतो बाली' इत्यत्र रामस्य कर्तुः बाणस्य करणस्य च अनभिहितत्वात् ताभ्यां तृतीया। रामकर्तृकबाणकरणक हिंसाक्रियाविषयो बाली इत्यर्थः।

**कर्म**—अनुक्ते कर्मणि '**कर्मणि द्वितीया**' इति सूत्रेण द्वितीयाविभक्तिर्भवति। यथा—'**हरिं भजति**' कर्म च ईप्सिततम-अनीप्सित-अकथितभेदेन त्रिविधम्। तत्र ईप्सिततमं 'हरिं भजति' इति प्रदर्शितमेव, अनीप्सितं द्वेष्योदासीनभेदेन द्विविधम्। द्वेष्यं यथा—'**विषं भुङ्क्ते**'। उदासीनं यथा—'**ग्रामं गच्छन् तृणं स्पृशति**'। अकथितम्—'अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्'। एतदेव अकथितं कर्म। यथा—'**गां दोग्धि पयः**'। गौः क्षरणे अपादानम्। तदपादानत्वमुपेक्ष्य सम्बन्धित्वात्मना गोर्विवक्षायां कर्मत्वम्। एतदेव अकथितकर्मत्वमादाय दुहादीनां द्विकर्मत्वव्यवहारः। '**हरिं भजति**' इत्यत्र हरिनिष्ठतुष्टयनुकूल एकदेवदत्तनिष्ठो वर्तमानो व्यापारः, इति बोधः।

**करणम्**—करणोदाहरणन्तु कर्तृप्रकरणे प्रदर्शितमेव। '**हेतौ**' इति सूत्रेण हेत्वर्थे तृतीया भवति 'दण्डेन घटः' इत्यादौ। द्रव्य-गुण-क्रियात्मककार्यत्रयनिरूपितं निर्व्यापार-सव्यापारवृत्ति च यत् तद्धेतुत्वम्। क्रियाजनकमात्रवृत्तिव्यापारवद्वृत्ति च यत् तत् करणत्वम्। इति हेतुत्व-करणत्वयोर्भेदः।

**सम्प्रदानम्**—'कर्मणा यमभिप्रैति स सम्प्रदानम्। '**चतुर्थी सम्प्रदाने**' इति सूत्रेण सम्प्रदानस्य चतुर्थीविभक्तिः भवति। यथा—**विप्राय गां ददाति**। अत्रापि अनभिहितस्यैव सम्प्रदानस्य चतुर्थीविभक्तिर्भवति न त्वभिहितस्य। 'दीयते असौ इति दानीयो विप्रः' इत्यत्र न चतुर्थी। 'विप्राय गां ददाति' इत्यत्र यजमानकर्तृका गोकर्मिका विप्रसम्प्रदानिका दानक्रिया, इति बोधः।

**अपादानम्**—'ध्रुवमपायेऽपादानम्' इति सूत्रेण विश्लेषे साध्ये अवधिभूतस्य कारकस्य अपादानसंज्ञा भवति। 'अपादाने पञ्चमी' इति

सूत्रेण पञ्चमी। यथा—**'ग्रामाद् आयाति'** इत्यत्र देवदत्तकर्तृका ग्रामावधिका आगमनक्रिया, इति बोधः।

**षष्ठी**—षष्ठ्यर्थः सम्बन्धस्तु न कारकं क्रियाऽनुपयोगात्। यथा—**'देवदत्तस्य पिता गच्छति'** इत्यत्र देवदत्तस्य साक्षात्सम्बन्धः पित्रा सह न तु गच्छतीति क्रियया। अतो देवदत्तस्य गमनक्रियायामनुपयोगः, तस्मात् षष्ठ्याः कारकेषु ग्रहणं न सम्भवतीति।

**अधिकरणम्**—'आधारोऽधिकरणम्' इति सूत्रेण आधारस्य अधिकरणसंज्ञा भवति। 'सप्तम्यधिकरणे च' इत्यनेन अधिकरणस्य सप्तमी भवति। यथा—'कटे आस्ते' इत्यत्र देवदत्तकर्तृका कटाधिकरणिका आसनक्रिया, इति बोधः।

**सम्बोधनम्**—'सम्बोधने च' इति सूत्रेण सम्बोधनस्य प्रथमाविभक्तिर्भवति। सम्बोधनम्—अभिमुखीकृत्य ज्ञापनम्। **'हे राम'** इत्यत्र मां पाहीति शेषः। इह रामम्प्रति मद् रक्षणं ज्ञाप्यम्।

**नैयायिकमते**—वाक्ये प्रथमान्तस्य मुख्यत्वात् प्रथमान्तार्थमुख्यविशेषकः शाब्दबोधो भवति। यथा—**'देवदत्तः ग्राम गच्छति'** इत्यत्र ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूलकृतिमान् एकत्वावच्छिन्नो देवदत्तः, इत्याकारकं बोधं स्वीकुर्वन्ति।

**वैयाकरणाः**—'भावप्रधानमाख्यातम्' इति निरुक्तकारयास्कवचनात् क्रियामुख्यविशेष्यकं बोधं स्वीकुर्वन्ति। **'क्रियाप्रधानं तिङन्तम्'** इति निरुक्तवचनार्थः। अतएव 'पश्य मृगो धावति' इति वचनं सङ्गच्छते। तत्र मृगकर्तृकं धावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनम्, इति बोधः।

तत्र धावनरूपार्थवाचकस्य धावतीत्यस्य प्रातिपदिकत्वाभावात् न द्वितीया। प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिनां नैयायिकानां मते तु अन्यदेशसंयोगानुकूलकृतिमन्मृगकर्तृकं प्रेरणाविषयीभूतं यद् दर्शनं तदनुकूलकृतिमांस्त्वम्, इति बोधः। तत्र विशेष्यार्थवाचकमृगशब्दस्य प्रातिपदिकत्वात् दृशि क्रियाकर्मकत्वाच्च द्वितीयापत्तौ 'पश्य मृगं धावती'ति प्रयोगापत्तिः।

'सर्वं हि वाक्यं क्रियया परिसमाप्यते' इति न्यायेन यत्र क्रियापदं न दृश्यते तत्र क्रियापदाऽध्याहारेणैव शाब्दबोधदर्शनाच्च वैयाकरणसम्मतः क्रियामुख्यविशेष्यकबोध एव प्रामाण्यकोटिमाटीकते ।

०

## पाणिनिः

ब्रह्मण आरभ्य अद्य यावत् समुपलब्धस्य व्याकरणशास्त्रस्य पठन-पाठनक्रमस्य सुव्यवस्था वैज्ञानिकप्रकारश्च यथा पाणिनीये व्याकरणे दृष्टिपथं याति न तथाऽन्येषु व्याकरणेषु, अतो विविधव्याकरण-शास्त्रकर्तृमहर्षिमणिमालायां मध्यमः सुमेरुरिव महर्षिः पाणिनिश्चि-राय जागर्ति । तमधिकृत्य प्राक्पाणिनिः पश्चात् पाणिनिरिति ऐतिह्यं द्विधा विभक्तम् । अनेन वयं व्याकरणशास्त्रपथं प्रशस्तीकरणे ससुखं पारयामः ।

महामतिः पाणिनिः शब्दागमनिधिं जगद्गुरुं साम्बं शिवं प्रसाद्य व्याकरणज्ञानं लेभे, इत्यनुश्रूयते । अनुभूयते च तस्य 'अष्टाध्यायी'-रचनया । एतस्या वैज्ञानिकं निरूपणम् अद्याप्यखिलं जगन्मोहयति । अनेन महर्षिणा स्वप्राग्वर्तिनां समेषामपि विदुषां रचनाः परिशील्य समग्रेषु देशेषु परिभ्रम्य तत्तद्देशविशेषेषु प्रचलितशब्दानां साधुत्व-प्रकारं साधु निर्दिश्यैव स्वकीया रचना विहितेति तस्य परिशीलनेन स्पष्टं प्रतिभाति ।

**पाणिनेः पूर्ववर्तिन आचार्याः**—यद्यपि राज्ञामाक्रमणप्रभृतिभिर-नेकः कालकृतविप्लवैरद्य सम्पूर्णं भारतीयं वाङ्मयं नास्ति सुलभं येन सडिण्डिमघोषं वक्तुं शक्येत, यदयं विषय एतावानेवेति । न सा स्थितिरस्माकं न वा वयं तपस्विनः, येनाऽखिलं जगत् करामलकवत् पश्यामः । तथापि समुपलब्धप्रमाणबलादेव यत् किमप्युल्लिख्यते । तत्र पाणिनेः पूर्ववर्तिग्रन्थकाराणां प्राय इमानि नामानि समुपलभ्यन्ते ।

**यथा**—इन्द्रः, वायुः, भरद्वाजः, भागुरिः, पौष्करसादिः, चारायणः, काशकृत्स्नः, वैयाघ्रपद्यः, माध्यन्दिनिः, रौढिः, शौनकः, गौतमः, व्याडिः, आपिशलिः, काश्यपः, गार्ग्यः, गालवः, चाक्रवर्मणः, भारद्वाजः, शाकटायनः, शाकल्यः, सेनकः स्फोटायनश्च।

अत्रापि विद्वत्सु मतभेदो जागर्ति। उपर्युक्तेषु वैयाकरणेषु कतिपये पाणिनिना स्वकीयायाम् अष्टाध्याय्यां पठिताः, केचन परित्यक्ताः। एवम्प्रकारेणैष आचार्यसमवायो द्विधा विभक्तः प्रतिभाति। तदनुसारम् इन्द्रमारभ्य व्याडिपर्यन्ता आचार्याः प्रथमपङ्क्तौ परिगण्यन्ते। तदवशिष्टा विशिष्टाश्च त आचार्या येषां समादरः पाणिनिना स्वकीयायामष्टाध्याय्यां कृतं विद्यते। एतेषां कालक्रमविषयेऽस्ति विदुषां विभिन्ना मनीषा किन्तु समेषामेतेषां विवेचनस्याधारः पाणिनिरेव नाऽत्र कापि विचिकित्सा।

यद्यप्यनेन स्वकीयपरिचयादिविषये कुत्रापि किमपि नोल्लिखितं तथापि परवर्तिभिराचार्यैः परश्शतैः प्रयत्नैरेतस्य परिचयादिकं यथा स्थिरीकृतं तथाऽत्र क्रमेण निर्दिश्यते।

**परिचयः**–आचार्यः पुरुषोत्तमदेवः 'त्रिकाण्डशेषाऽऽख्ये' कोषे षट् पाणिनिपर्यायानेवमाह—'**पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्कि-पाणिनौ। शालातुरीयः**', इति। पुरुषोत्तमदेवस्वीकृतनाम्नां सम्पुष्टिः–१. '**पाणिनिः**' अस्य विषये नास्ति विदुषां विरोधः। अस्य निष्पत्तिर्द्विधा समुपलभ्यते। प्रथमा तावत् **पणिन्**-शब्दादणि कृते इञि च। द्वितीया—अकारान्तात् **पणिन**-शब्दादिञ्। २. **पणिनिः** इति नाम काशिकायां ६।२।१४ तथा चान्द्रवृत्तौ २।२।६८ समुपलभ्यते। ३. **दाक्षीपुत्रः**—'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः' इति महाभाष्ये १।१।२०। अन्यदपि—'दाक्षीपुत्रवचो व्याख्यापटुर्मीमांसकाग्रणीः' इति समुद्रगुप्तविरचिते कृष्णचरिते। '**शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते**।' इति पाणिनीयशिक्षायाम्। ४. **शालङ्किः**—नामेदं कोषे एवोपलभ्यते। महाभाष्यकारः पतञ्जलिः 'शालङ्केर्यूनश्छात्राः शालङ्काः' एवं लिलेख। ५. **शालातुरीयः**—दन्त्यादिः, तालव्यादिश्च शालातुरीयशब्दः, काशिकाविवरणपञ्जिकायां, गणरत्न-

महोदधौ, भामहस्य काव्यालङ्कारे च परिदृश्यते। ६. **आह्निकः**-- पर्यायस्यास्य विषये पुरुषोत्तमदेवस्य कोष एव प्रमाणपदवीमधिरोहति, नान्यत्र किमपि प्रमाणमुपलभ्यते।

**वंशपरम्परा**—महामहोपाध्यायः शिवदत्तशर्मा पाणिनेः 'शालङ्किः' इति नाम पितृव्यपदेशजं मनुते। स एव पाणिनेः पितुर्नाम 'शलङ्क' इति व्याजहार। पतञ्जलिर्महाभाष्ये पाणिनिं दाक्षीपुत्रत्वेन स्वीचकार। गोत्रप्रत्ययान्तोऽयं दाक्षीशब्दः। अनेन सिद्ध्यति पाणिनेर्माता **दाक्षी** दक्षकुलसम्भवेति। 'शोभना खलु दाक्षायणस्य सङ्ग्रहस्य कृतिः' इति महाभाष्ये पतञ्जलिः। अत्र व्याडेर्नाम दाक्षायणत्वेन निर्दिष्टम्। अनेन व्यज्यते यद् **दाक्षायणः** पाणिनेर्मातुलपुत्रो भवेत्। केचन व्याडिं पाणिनेर्मातुल इति निश्चिन्वन्ति। अनेनानुमीयते यद् दाक्ष्याः पितुर्नाम **'व्यड'** इत्यासीत्। छन्दःशास्त्रस्य रचयिता **पिङ्गलः** पाणिनेरनुज आसीदिति वेदार्थदीपिकायामाम्नातम्। कथासरित्सागरम्प्रमाणीकृत्य पाणिनेर्गुरोर्नाम **'वर्ष'** इत्यासीत्। ऐतिह्यदृष्ट्या पाणिनेर्गुरुसम्बन्धि-चर्चा प्रायो निराधारा, 'उपसेदिवान् **कौत्सः** पाणिनिम्' महाभाष्ये ३।२।१०८। नागेशस्य **लघुशब्देन्दुशेखरः** प्रमाणयति यत् **कात्यायन** पाणिनेः शिष्य आसीदिति। एवं कौत्सकात्यायनौ पाणिनेरन्तेवासिनौ

**निवासभूमिः**—वर्धमानकृते गणरत्नमहोदधौ—'शलातुरो नाम ग्रामः सोऽभिजनोऽस्यास्तीति **शलातुरीयः**, तत्रभवान् पाणिनिः' इति अष्टाध्याय्यामपि पाणिनिः शलातुरशब्दादभिजनेऽर्थे शालातुरीयपद सिद्धिं चकार। पतञ्जलिमते तु—'अभिजनो नाम यत्र पूर्वैरुषितम् अतः पाणिनेः पूर्वजानां वासभूः **शलातुर** इति। साम्प्रतिका इदं स्था लाहुर इति मन्वते। केचन विद्वांसः पाणिनेर्वासभूमिं **वाहीक**-देशपरि सरवर्तिनीं स्वीकुर्वन्ति।

**समयः**—पाश्चात्यैर्विद्वद्भिः पाणिनेः समयो विक्रमाब्दात् ६५ पूर्वंत ६५८ विक्रमवर्षपूर्वं यावत् स्वीकृतः। अन्तःसाक्ष्यभूतैर्बहुभि प्रमाणैः 'संस्कृतव्याकरणशास्त्रस्येतिहासे' श्रीमान् युधिष्ठिरो मीमांस

प्रमाणयति यत् स्थूलतया पाणिनेः समयो विक्रमाब्दात् २९०० वर्षपूर्वं निश्चीयत इति । अन्येषां मते पाणिनेः समयः—

| | |
|---|---|
| १. सत्यव्रतः सामश्रमी | २४०० ई० पूर्वम् |
| २. गोल्डस्टुकरः | ७०० ई० पूर्वम् |
| ३. वेलवेलकरः | ७०० ई० पूर्वम् |
| ४. भाण्डारकरः | ७०० ई० पूर्वम् |
| ५. वासुदेवशरणः | ५०० ई० पूर्वम् |
| ६. मैकडानलः | ५०० ई० पूर्वम् |
| ७. मैक्समूलरः | ३५० ई० पूर्वम् |
| ८. वेबरः | ३०० ई० पूर्वम् |
| ९. कीथः | ३०० ई० पूर्वम् |

**माहेश्वरसम्प्रदायः**—पाणिनीयव्याकरणस्य साक्षात् सम्बन्धो माहेश्वरसम्प्रदायेन सह वर्तते । तद्यथा—'इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि' इत्यनेन स्पष्टं प्रतिभाति । इदमपि सुप्रसिद्धं यत् पाणिनिः शिवप्रसादादेव चतुर्दशसूत्रसमवायमधिगत्य स्वकीयमनुपमं व्याकरणशास्त्रं प्रणिनायेति ।

**मङ्गलाचरणपरम्परा**–पतञ्जलिः पाणिनिमाधारीकृत्य सिद्धान्तमिमं स्थिरीचकार यत्—**'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते'** इति । तत्रोदाहरणरूपेण सूत्रत्रयं समुद्धरति–प्रथमम—**'वृद्धिरादैच्'** १।१।१ द्वितीयम्—**'भूवादयो धातवः'** १।३।१। तृतीयम्—**'नोदात्तस्वरितोदयम्'** ८।४।६७।

**पाणिनेर्व्याकरणग्रन्थाः**—१. धातुपाठः, २. गणपाठः, ३. लिङ्गानुशासनम ४. शिक्षाग्रन्थश्च । इतः परम् अनेन **जाम्बवतीजय**-नामकं काव्यमपि रचितम् इति । 'आदौ व्याकरणं काव्यमनुजाम्बवतीजयम्' अनेन पद्यांशेन सिद्ध्यति । एतस्यैवापरं नाम **'पातालविजय'**-मपि वर्तते ।

**अष्टाध्याय्याः पाठकल्पना**–पाणिनिरष्टाध्याय्या बहुवारं बहुविधं प्रवचनं चक्रे । इयं त्रिविधता वृद्ध-मध्यम-लघुभेदैर्व्यज्यते पुनश्च

त्रिधा विभक्ता इमे पाठाः । यथा—१. प्राच्यपाठः, २. उदीच्यपाठः ३. दाक्षिणात्यपाठश्च ।

**पणिनीयव्याकरणस्य नामानि**—१. अष्टकम्, २. अष्टाध्यायी ३. शब्दानुशासनम् ४. वृत्तिसूत्रञ्चेति । एतेषां विवरणमस्मत्कृते व्याकरणशास्त्रस्येतिहासे द्रष्टव्यम् ।

**पाणिनेः प्रशस्तिः**—'सामर्थ्ययोगान्नहि किञ्चिदस्ति पश्यामि शास्त्रे यदनर्थकं स्यात्' इति महाभाष्ये पतञ्जलिः । अन्यदपि–'उदक् च विपाशः' सूत्रवृत्तिप्रसङ्गे पतञ्जलिः । साश्चर्यं निर्दिशति यत्—'महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य' इति । ऋग्वेदस्य भाष्यकारः **वेङ्कटमाधवः** लिखति यत् 'शाकल्यः पाणिनिर्यास्क इत्यृगर्थपरास्त्रयः' अर्थाद् ऋग्वेदस्यार्थज्ञेषु पाणिनिरन्यतम इति ।

**निर्वाणचर्चा**—अस्य मृत्युविषयकः सङ्केतः पञ्चतन्त्रस्य प्रसङ्ग-विशेषादित्थमुपलभ्यते 'सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः' इति । अनेन निश्चीयते यत् पाणिनेः प्राणान् सिंहो जहारेति । अत्र विषये प्राचीना गुरुपरम्परा एवं भणति यत् पाणिनिः सिंहशब्द-स्य व्याकृतौ अवशो बभूव । यथा—पृषोदरादिप्रकरणे—**'सिंहो वर्ण-विपर्ययात्'** इति निर्देशाज्ज्ञायते । अत एव स तं व्यापादयामास इति । केचन कथयन्ति यत् पाणिनिः व्याघ्रशब्दस्य **'व्याजिघ्रतीति व्याघ्रः'** एवंविधया व्याख्यया भ्रान्तः सः न केवलं घ्राणविषयतां नीतः अपितु भक्षित एव । पाणिनेरियं भ्रान्तिः स्वप्राणनाशिका जाता । अपरा एका पाणिनिनिर्दिष्टा भ्रान्तिश्चिराय सहृदयहृदयानि दुःखाकरोति सा चेत्थम्—

'नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥'

अन्यदपि सूक्तं केनाप्यालोचकवरेण पाणिनेर्विषये—

'मुनिः स्वतन्त्रतां प्राप्य यथेच्छति करोति तत् ।
सूत्रकृन्न नदी गङ्गा यमुना न स्थली नदी ॥' इति ॥

वैयाकरणानां परम्परामधिकृत्य पाणिनेर्निधनतिथिः **त्रयोदशी** इति यतोऽद्यापि त्रयोदशी अनध्यायदिवसरूपेण स्मर्यते तदनुगामिभिः

## कात्यायनः, कात्यः

मुनित्रयसमवाये पाणिनेरनन्तरं वार्तिककाररूपेण कात्यायनस्य नाम सादरं स्मृतिपथं नीयते। यथाऽयं वार्तिककृत्सु प्रसिद्धेश्वरमसीमानं प्राप न तथाऽन्ये। इदमपि गौरवास्पदं यदधिकांशतया महाभाष्ये कात्यायनकृतवार्तिकानामेव व्याख्यानमवलोक्यते। त्रिकाण्डशेषस्य रचयिता पुरुषोत्तमदेवः कात्यायनस्य पर्यायानेवमाह—कात्यः, कात्यायनः, पुनर्वसुः, मेधाजित्, वररुचिश्च। अत्र पुरुषोत्तमदेवनिर्दिष्टानां नाम्नां क्रमिकः परिचयः समुपस्थाप्यते। तद्यथा—

१. **कात्यः**—नामेदं गोत्रप्रत्ययान्तम्। महाभाष्ये ३।२।३। वार्तिककाररूपेण कात्यस्य नामोल्लेखः सुलभः। तद्यथा—'प्रोवाच भगवान् कात्यस्तेनासिद्धिर्यणस्तु ते'। अपरत्र बौधायनश्रौतसूत्रे ७।४। अपि **कात्य** उपलभ्यते।

२. **कात्यायनः**—युवप्रत्ययान्तमिदं नाम। 'जीवति तु वंशे युवा'। ४।१।१६५। इति सूत्रेण वंशे पित्रादौ जीवति सति पौत्रादेर्यदपत्यं चतुर्थादि तस्य युवसंज्ञा भवति। **'वृद्धस्य च पूजायाम्'** इति वार्तिकेन पूजायां गम्यमानायां गोत्रापत्यस्यैव युवसंज्ञा भवति। यथा—कतस्य युवापत्यं = कात्यायनः।

एतस्योल्लेखो महाभाष्ये एवं दृष्टिपथं याति—'न स्म पुराऽनद्यतन-इति ब्रुवता कात्यायनेनेह'। ३।२।११८।

३. **पुनर्वसुः**—पुनर्वस्वोर्जातः पुनर्वसुः। भाषावृत्तौ **'पुनर्वसुर्वररुचिः'** ४।३।३४। इति लभ्यते। महाभाष्ये 'पुनर्वसू च माणवकौ' १।२।६३। इति यदुपलभ्यते तत् कात्यायनं न प्रमाणीकरोति।

४. **मेधाजित्**—पर्यायस्यास्य विषये पुरुषोत्तमदेव एव प्रमाणपदवीमधिरोहति। तदन्यत्र कुत्राऽपि शब्दोऽयं कस्यापि दृग्गोचरतां न गतः कात्यायनविषये।

**५. वररुचिः**—वाररुचश्लोकानां निर्देशो महाभाष्ये ४।३।१०१।
समुपलभ्यते । महाराजः समुद्रगुप्तः कृष्णचरिते वररुचिं स्वर्गारोहण-काव्यस्य रचयितेति स्वीकरोति । तदनुसारं वररुचिरयं वार्तिककारः कात्यायन एव ।

पूर्वोक्ततृतीय-चतुर्थनाम्नोः सम्बन्धे विदुषां मतभेदः । तेषां मते इमे नामनी परवर्तिकात्यायनस्य, इति ।

**समयः**—यदि वयं कात्यायनं याज्ञवल्क्यस्य पौत्ररूपेण निश्चिनुमस्तर्हि वार्तिककारोऽयं कात्यायनः पाणिनेरुत्तरकालिकः सिद्धयति । यदि वा सोऽयं वर्ण्यमानः कात्यायनः पाणिनेः साक्षाच्छिष्य एव तर्हि नूनं पाणिनेः समकालिकः वैक्रमवर्षात् २९००-३००० वर्षपूर्वो निश्चीयते ।

**वंशः**—यथाऽस्माभिः प्राक् प्रपञ्चितं यत् कात्यः कात्यायनस्यैवापरपर्याय इति । तदनुसृत्य कात्यपदं गोत्रप्रत्ययान्तम् । अनेन सिद्धयति यत् कात्यस्य कात्यायनस्य वा मूलपुरुषः '**कतः**' इति ।

**अष्टाध्यायीवार्तिककाराः**—अष्टाध्यायीमधिकृत्य वैयाकरणैर्वार्तिकानि विरचितानि, तेषु केषांश्चिदेव नामानि समुपलभ्यन्ते । शेषास्तु अन्ये, अपरे, केचिदिति सर्वनामपदैरेव सङ्कीर्त्यन्ते । महाभाष्ये पञ्चवार्तिककाराणां तट्टीकासु नामद्वयं ततोऽधिकं प्राप्यते । एवं सप्तवार्तिककृतो नामतः सुविदिताः । तेषां नामानि—१. कात्यः कात्यायनो वा, २. भारद्वाजः, ३. सुनागः, ४. क्रोष्टा, ५. वाडवः, ६. व्याघ्रभूतिः ७. व्याघ्रपद्यश्च ।

**वार्तिकलक्षणम्**—

'उक्ताऽनुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः' ।।पराशरोपपुराणे।

एवमेव राजशेखरः काव्यमीमांसायाम्—'उक्ताऽनुक्तदुरुक्तानां चिन्ताकारि तु वार्तिकम्' अत्र वृत्तिपदेन शास्त्रप्रवृत्तिः । तद्यथा—वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिः । वृत्तेर्व्याख्यानं वार्तिकम् । वैयाकरणवाङ्मये वार्तिकपर्यायरूपेणैतेषां शब्दानां प्रयोगा दृश्यन्ते—१. वाक्यम्,

२. व्याख्यानसूत्रम्, ३. भाष्यसूत्रम्, ४. अनुतन्त्रम्, ५. अनुस्मृतिश्च। एतेषां समेषां पर्यायाणां विवरणं मदीये व्याकरणशास्त्रस्येतिहासे द्रष्टव्यम्।

**कात्यायनस्य वार्तिकपाठः**—पाणिनीयव्याकरणस्य सर्वथा पोषकः कात्यायनस्य वार्तिकपाठः। यो हि सम्प्रति स्वतन्त्ररूपेण नोपलभ्यते, सूत्राणि वार्तिकानि चेति द्वयमाश्रित्य पतञ्जलिना सुप्रसिद्धस्य महाभाष्यस्य रचना विहिता। इदमपि स्पष्टतया वक्तुं न शक्यते यदेतेषां कियती सङ्ख्याऽस्ति। महाभाष्ये न केवलं कात्यायनस्यैव वार्तिकाणां समावेशो दृश्यते, अपितु अन्येषामपि।

**अस्य कृतीनां परिचयः**—कात्यायनगोत्रो वररुचिः स्वकीयगोत्रनाम्नैव परां ख्यातिमुपजगाम। महाभाष्ये पतञ्जलिः कमपि **वाररुचं काव्यं** निर्दिष्टवान्, यस्यापरं नाम **स्वर्गारोहणकाव्यम्**। प्रस्तुतस्य काव्यस्योल्लेख **कृष्णचरिते** एवमुपलभ्यते—

'यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचिः कविः॥'

'न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः॥'

अत्र श्लोकद्वये समुद्रगुप्तोऽपि नामद्वयेन कात्यायनोऽपरनामधेयं वररुचिमेव स्वीचकार। आचार्यवररुचेः बहवः श्लोकाः सुभाषितपद्यरूपेण शार्ङ्गधरपद्धतौ, सदुक्तिकर्णामृते, सुभाषितमुक्तावल्यादिषु यत्र तत्र समुपलभ्यन्ते। महाभाष्ये १।१।१ **भ्राजसंज्ञाकानां** श्लोकानामुल्लेखो दृशोर्गोचरतां याति। कैयट-हरदत्त-नागेशभट्टादीनां मतेऽपि भ्राजसंज्ञकश्लोकाः कात्यायनस्यैव। एतेषु पद्यमेकं महाभाष्यस्य प्रथमाह्निके विद्यते।

अमुष्य निम्नलिखिता एते ग्रन्थाः सम्प्रति दुर्लभाः—छन्दःशास्त्रं साहित्यशास्त्रं वा, स्मृतिः, उभयसारिकाभाणः, सामुद्रिकग्रन्थश्च।

—:०:—

## पतञ्जलिः

अशेषविद्याशेवधेः शेषावतारस्य पतञ्जलेर्विषयेऽधस्तनमिदं पद्यं सुधीसमाजे सुप्रसिद्धमस्ति। यदनेन मुनिना योगशास्त्रे, व्याकरणशास्त्रे वैद्यकशास्त्रे च ग्रन्थरचना व्यधायीति। तत् पद्यं यथा—

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि'॥

यद्यप्येतस्य पद्यस्य प्रामाणिकता नास्ति इतिहासविदां सम्मता, तथाऽप्ययं पतञ्जलिर्महाभाष्यकाररूपेण प्रसिद्धेः परांकोटिमाटीकते। अयं पाणिनीयव्याकरणमाश्रित्य महद्व्याख्यानं लिपिबद्धश्चकार। यदद्यापि धीमतां चेतांसि चमच्चरीकरोति। नीरसमपि व्याकरणशास्त्रं स्वकीयया नूतनव्याख्यानसरण्याऽयं सुतरां सरसयाञ्चकार। यदधीत्य देशिका वैदेशिकाश्च विद्वांसो महाभाष्यमिदं मुक्तकण्ठतया प्रशंसन्ति। यद्यपि सर्वेषु पाणिनीयसूत्रेषु पतञ्जलेर्भाष्यं नोपलभ्यते तत्र गुरुपरम्परया ज्ञायते यन्नोपलब्धं तत् सर्वम् **'अजभक्षितमेव'**।

**समयादिपरिचयः**—यस्मिन् महाभाष्ये भारतीयं सकलं वाङ्मयं स्पष्टतमं प्रतिभाति, तत्र तस्यैव ग्रन्थकर्तुः परिचयोऽन्विष्यापि नोपलभ्यते। इत्यहो! प्राचां विदुषां स्वाभिमानरक्षणपरा काऽप्यलौकिकी परम्परा।

अत्र संस्कृतव्याकरणशास्त्रस्येतिहासलेखकस्य श्रीमतः पण्डितप्रवरस्य युधिष्ठिरमीमांसकस्य मतं सादरमुद्ध्रियते। महाभागेनानेन बहूनां मतमतान्तराणामूहापोहानन्तरं सप्रमाणं यन्मतं स्थिरीकृतं तदिदम्। चन्द्रगोमिद्वारापरिष्कृतवर्तमानपाठमाधारीकृत्य महाभाष्यकारस्य पतञ्जलेः कालनिर्धारणं सर्वथाऽन्याय्यम्। 'यदि मदीयप्रदर्शितः २००० वि०पू० कालः कथञ्चित् विद्वद्भ्यो न रोचते चेत् तथापि अमुष्य कालो विक्रमपूर्वतः १२००वर्षाद् उत्तरकालिकः कथमपि नैव सम्भवती'ति।

**भाष्यस्य लक्षणम्**—विष्णुधर्मोत्तरस्य तृतीये खण्डे चतुर्थाऽध्याये भाष्यलक्षणमित्थं प्रतिपादितं विराजते—

'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥'

**'यथोत्तरं मुनीनां प्रामाण्यम्'** वाक्यमिदं प्रमाणयितुं महाभाष्यग्रन्थः सुतरां समर्थः । प्राच्याः पाश्चात्याश्च सर्वेऽपि वैयाकरणाः पतञ्जलिकृत-महाभाष्यस्य पुरतः सर्वदा विनतकन्धरा भवन्ति । अयं हि महामुनिः पतञ्जलिः प्राचीनेषु ग्रन्थेषु विविधैः पर्यायैः परिचीयते । तद्यथा-गोनर्दीयः, गोणिकापुत्रः, नागनाथः, अहिपतिः, फणिभृत्, शेषराजः, शेषाहिः, चूर्णिकारः, पदकारश्चेति । क्रमेणैतेषां परिचयः—

१. **गोनर्दीयः**—यादवप्रकाशप्रभृतिकोषकारैरिदं नाम पतञ्जलेः पर्यायरूपेण निर्दिष्टम् । भर्तृहरि-कैयटावपि समर्थयतः कोषकाराणां पूर्वोक्तं मतम् ।

२. **गोणिकापुत्रः**—महाभाष्ये १।४।५१ । गोणिकापुत्रस्यापि मत-मुपलभ्यते । नागेशप्रमुखा व्याख्यातारः गोणिकापुत्रं पतञ्जलेः पर्याय-त्वेन स्वीकुर्वन्ति स्म । अत्र स्वस्थप्रमाणमन्तरा न किमपि वक्तुं पार्यते ।

३–६. **नागनाथत** आरभ्य **शेषाहिपर्यन्तनामानि** कस्याप्येकस्यैव निर्वचनतत्परा इति नो धारणा । तत्र **अहिपति**-विषये चक्रपाणिश्चरक-टीकायामेवं निबध्नाति—

'पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः' ॥

चक्रपाणिन एषा उक्तिः पूर्वोक्तं **'योगेन चित्तस्येत्यादि'** पद्यं सर्वथा समर्थयति ।

७. **चूर्णिकारः**—भर्तृहरिविरचितायां महाभाष्यदीपिकायां वारत्रयं चूर्णिकारपदेन पतञ्जलिः समुपवर्णितः । अपरमपि क्षीरस्वामी अमर-कोषस्य टीकायां चूर्णिपदे भाष्यपर्यायत्वेन स्वीकरोति ।

८. **पदकारः**—स्कन्दस्वामी निरुक्तटीकायाम्, उव्वटश्च ऋक्प्रातिशाख्यस्य टीकायां पदकारनाम्ना पतञ्जलिं सस्मरतुः।

**वार्तिकानां भाष्यकाराः**—पाणिनेरष्टाध्याय्यां वार्तिकेषु परवर्तिभिराचार्यैः समये समये भाष्यानि निबद्धानि। अमुष्य परिचयो महाभाष्यस्याऽध्ययनेन सम्यग् उपलभ्यते। वार्तिकेषु महाभाष्यस्य रचना पतञ्जलेर्नास्ति सर्वप्रथमा, इतः पूर्वमपि व्याख्यात्रयस्य सूचना इतिहासविद्भिः प्राप्यते। तास्तिस्रो व्याख्याः पतञ्जलिसमये वर्तमाना आसन्निति विदुषां मतम्। सखेदं सूच्यते यत्ताः व्याख्याः साम्प्रतं नोपलभ्यन्ते। एवम्प्रकारेण भारद्वाज-सौनागप्रभृतिकृतवार्तिकपाठेषु अपि बहूनि भाष्यानि लिलिखुस्ते आचार्याः। नाऽधुना तेषां वास्तविकं स्वरूपं दृश्यते। महाभाष्यानन्तरमपि वार्तिकभाष्यकृत्सु त्रयाणां नामान्युपलभ्यन्ते। तेषां यथामति परिचयः प्राभृतीक्रियते पिपठिषूणाम्पुरतः।

### पतञ्जलिपरवर्तिवार्तिकव्याख्याकाराः

१. **हेलाराजः**—कात्यायनकृतवार्तिकपाठमधिकृत्य **वार्तिकोन्मेष**नाम्नीं व्याख्यां रचयामास। सम्प्रति ग्रन्थोऽयं दुर्लभः, केवलं सूचनाऽवशिष्टा।

२. **राघवसूरिः**—अनेन वार्तिकानाम् '**अर्थप्रकाशिका**-ऽऽख्या व्याख्या व्यरचि। अमुष्य हस्तलेखो मद्र( मद्रास )देशीये राजकीयहस्तलेखसङ्ग्रहालयेऽद्यापि विराजते।

३. **राजरुद्रः**—एतन्नामकेन विदुषा काशिकावृत्तिस्थश्लोकवार्तिकानां व्याख्यानं व्यधायि। अस्यापि पाण्डुलिपिर्मद्रदेशे सुरक्षिता वर्तते।

**महाभाष्यस्योपेक्षा**—'चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः'। आभाणकमिममनुसृत्य सर्वेषां सुदिनानि दुर्दिनानि च समायान्तीति निश्प्रचम्। एवमेव समये-समये पठन-पाठनादिप्रचाराभावः सम्भवतीति शास्त्रान्तरैरवगम्यते। अत एव महाभाष्यस्योपेक्षासूचकं पद्यमिदमद्यापि जोघुष्यते वैयाकरणानां समवाये—

'कौमुदी यदि नायाति वृथा भाष्ये परिश्रमः।
कौमुदी यदि चायाति वृथा भाष्ये परिश्रमः॥'

पद्यमिदं सूचयति यत् परिज्ञाते कौमुदीग्रन्थे महाभाष्यस्य नास्ति कोऽप्युपयोगः। अल्पसम्पत्सम्पन्ना क्व वराकी कौमुदी क्व च पतञ्जलेर्महाभाष्यम् ? अत्र महाभाष्यविद एवाऽवदधतु किमेषा धारणा युक्तियुक्ता ?

एतद् ह्रासात्मकं वितण्डावादात्मकञ्च तात्कालिकानां विदुषां डिण्डिमघोषमाकर्ण्य स्वामिवर्य्यो विरजानन्दसरस्वती घोषणामिमां चकार—

'अष्टाध्यायी-महाभाष्ये द्वे व्याकरणपुस्तके।
ततोऽन्यत् पुस्तकं यत्तु तत्सर्वं धूर्तचेष्टितम् ॥' इति ॥

—:०:—

## भर्तृहरिः

व्याकरणवाङ्मये महाभाष्यस्य महोच्चं स्थानं जागर्ति, अतएवाऽत्र बहुभिराचार्यैस्तत्र व्याख्या विधाय स्वकीया लेखन्यः रसनाश्च पाविताः। यद्यपि तेषु बहूनां टीकाकाराणां नामानि कृतयश्च सम्प्रति दुर्लभाः सञ्जाताः। तथाप्यत्र तेषां यावद्बुद्धिबलोदयं परिचयादिकं समुल्लिख्यते। तेषु सर्वप्राचीन आचार्यो **भर्तृहरिः**।

महाभाष्यस्य टीकाकर्तृसमवाये प्रामाणिकत्वात् प्राचीनत्वाच्च भर्तृहरेः स्थानं किमपि विशिष्टं गौरवं बिभर्ति। प्राचां परिपाटीमनुसरताऽनेनापि स्वकीयपरिचयः कुत्रापि न लिखितः। प्रमाणमन्तरा न वयं सक्षमा याथातथ्यं विवेचयितुम्।

**गुरुः**—भर्तृहरिः स्वकीयगुरोर्नामनिर्देशं न कृतवान्। आचार्यः पुण्यराजोऽस्य गुरोर्नाम '**वसुरात**' इति विलिलेख। स एवं निर्दिशति—

'आचार्यवसुरातेन न्यायमार्गान् विचिन्त्य सः।
प्रणीतो विधिवच्चायं मम व्याकरणागमः' ॥

**समयनिर्देशः**—यथास्माभिरस्य परिचयादिकविषये लिखितं सैव स्थितिः कालनिर्णयसम्बन्धेऽपि वरीवर्तीति। केचन विद्वांसः **इत्सिङ्ग**-महाभागं प्रमाणीकृत्य भर्तृहरि-समयं विक्रमस्य सप्तमशताब्द्या उत्तरार्धं स्वीकुर्वन्ति, साम्प्रतिका ऐतिह्यकोविदा **इत्सिङ्गमते** सन्दिहानास्तस्य प्रतीकारं रुचिकरं वाञ्छन्ति। **'नह्यमूला जनश्रुतिः'** इति कृत्वा अस्य विषये प्रसिद्धिरियमस्ति यदयं महाराजस्य विक्रमादित्यस्य सहोदरो भ्रातेति।

काशिकाया उदाहरणेषु भर्तृहरिविरचितस्य **वाक्यपदीय**-ग्रन्थस्य सङ्केतो लभ्यते। काशिकायाः संरचना सं० ६८०–७०१ मध्यकाले समभवदिति। अनेन सिद्धचति यद् वाक्यपदीय-ग्रन्थस्य निर्माणकालः काशिकातः प्राचीन आसीदिति। पाश्चात्या ऐतिहासिकाः चन्द्रगुप्त-द्वितीयस्य समयं वि० सं० ४३७–४७० यावत् स्थिरीकुर्वन्ति। एभिस्तथ्यैरिति निश्चीयते यद् भर्तृहरिः कथमपि वि० सं० ४००तः अर्वाचीनो नास्त्येव।

भारतस्य यात्री इत्सिङ्गः निर्दिशति—यदत्र ३००० श्लोकाः सन्ति तथा एतेषां टीकाभागः १४००० श्लोकात्मकः। श्लोकात्मको भागः श्रीमद्भर्तृहरेः कृतिः। टीकाभागो धर्मपालोपाध्यायस्य स्वीक्रियते। केचन विद्वांसः 'पेइ-न'-संज्ञकं वाक्यपदीयस्य तृतीयं प्रकीर्णकाण्डं स्वीकुर्वन्ति। यदि मतमेतत् समीचीनं स्यात् तर्हि **वाक्यपदीयस्य** रचनाकालः धर्मपालसमयादपि प्राक्तनः स्थास्यति। धर्मपालस्य निधनसंवत् ६२७ वि० इत्यस्ति। अतो वाक्यपदीयस्य रचनाकालः वि० सं० ६००तः प्राचीन एव।

**भर्तृहरिविरचितग्रन्थाः**—१. महाभाष्यदीपिका, २. वाक्यपदीय-काण्डानि १, २, ३। ३. वाक्यपदीयस्य प्रथम-द्वितीयभागे स्वोपज्ञटीका, ४. भट्टिकाव्यम्, ५. भागवृत्तिः, ६. नीति-शृङ्गार-वैराग्यशतकत्रयम्, ७. मीमांसाभाष्यम्, ८. वेदान्तसूत्रवृत्तिः, ९. शब्दधातुसमीक्षा, १०. षष्ठीश्रावी भर्तृहरिवृत्तिः, ११. मीमांसासूत्रवृत्तिः।

एषा भर्तृहरिकृता सुदीर्घा ग्रन्थावलिः—इतिहासविदां विदुषां तोषाय तावद् भवितुं न शक्नोति, यावदेतेषां ग्रन्थानां बहिरङ्ग-मन्तरङ्गञ्च स्वरूपं साधु परिशीलितं न स्यात्। यतो हि कस्यापि लेखकस्य सत्सु बहुषु ग्रन्थेष्वपि विषयभेदः कामं तत्र-तत्र स्यात् किन्तु गन्थकर्तुः शैली, आत्मानुरागः, विचारसञ्चारप्रकारः सर्वत्र सूक्ष्मे-क्षिकयाऽवलोकनेन समान एव दृष्टिपथं याति नास्त्यत्र सन्देहलेशः।

**मतभेदः**—भर्तृहरिविषये चिराद् विद्वत्सु धारणेयं बद्धमूला सञ्जाता यद् भर्तृहरिनामका अनेके विद्वांसः समभवन्निति। यथा सामान्यतया अन्येषु कालिदासप्रभृतिविद्वत्सु—**'कालिदासत्रयी किमु'** इत्यादिभावोद्‌गाराः समये-समये समुद्‌भूताः कर्णकुहरातिथीभवन्ति, तद्वदत्रापि।

अतोऽत्र विषये पूर्वोक्तभर्तृहरिविरचितग्रन्थेषु प्रारम्भतो निर्दिष्टा ग्रन्थत्रयी नूनं भर्तृहरिकृतेति विदुषां सम्मतं मतम्। यतो हि तत्र बाह्यसाक्ष्यापेक्षया अन्तरङ्‌गं साक्ष्यं बलवत्तरम्। तदनु वर्णिता ग्रन्था विवादाय समुपस्थिताः। इतः परं विशेषविवेचनार्थम् इतिहासग्रन्थाः समालोचनीयाः।

—: ० :—

## भट्टोजिदीक्षितः

श्रीमान् दीक्षितमहोदयः पाणिनीयायामष्टाध्याय्यां **'शब्दकौस्तुभा-भिधां'** महतीं वृत्तिं निबबन्ध। वृत्तिरियं सम्प्रति समग्रा नोपलभ्यते। शब्दकौस्तुभस्य प्रथमाध्यायस्य प्रथमे पादे दीक्षितः पतञ्जलि-कैयट-हर-दत्त-प्रभृतीनां ग्रन्थोक्तविषयाणां स्वरूपपरिवर्तनपुरस्सरं ग्रहणं चक्रे।

**परिचयः**—अयं महाराष्ट्रदेशीयो ब्राह्मण आसीत्, अस्य पितु-र्नाम **लक्ष्मीधरः**। अस्य लघुभ्रातुर्नाम **रङ्गोजिभट्ट** आसीत्। अस्य

पुत्रः **कौण्डमभट्टः। भट्टोजिदीक्षितस्य** पुत्रद्वयी आसीत्--१. भानुजिदीक्षितः २. वीरेश्वरश्च।

**गुरुः**—पण्डितराजजगन्नाथविरचितात् **प्रौढमनोरमाखण्डनात्** प्रतीयते यद् भट्टोजिदीक्षितः नृसिंहपुत्रशेषकृष्णतः सकलं व्याकरणशास्त्रमधिगतवान्, इति। शब्दकौस्तुभे स्वयं भट्टोजिदीक्षितोऽपि प्रक्रियाप्रकाशकर्त्रे शेषकृष्णाय गुरुपदं व्यवहृतवान्। तत्त्वकौस्तुभे भट्टोजिदीक्षितः—अप्पय्यदीक्षितं प्रणनाम।

**समयः**—डा० वेल्वाल्करमते दीक्षितमहाशयस्य समयः १६५७-१७०७ वि० सं० वर्तते। तदितरे १६३७ वि० सं० मन्वते। तथापि निश्चयेन वक्तुं न पार्यते, इदमित्थमिति। वाराणसेया विद्वांसोऽमुष्य ब्रह्मराक्षसरूपेण काशीवासं स्वीकुर्वते। यद्यपि बहुभिर्विद्वद्भिः अस्य कालनिर्णयविषये समये-समये बाढं प्रयतितं तथापि न कोऽपि निश्चयो लब्धः।

**रचनाः**—१. शब्दकौस्तुभः, २. सिद्धान्तकौमुदी, ३. प्रौढमनोरमा च। क्रमेणैतेषां परिचयादिकं प्रस्तूयते। भट्टोजिदीक्षितः सिद्धान्तकौमुदीनिर्माणात् प्राक् शब्दकौस्तुभं रचयामास। यतो हि स उत्तरकृदन्तस्यान्तिमे भागे निर्दिशति—

'इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम्।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे'॥

अनेन इदमपि सिद्ध्यति यद् दीक्षितः सम्पूर्णामष्टाध्यायीमधिकृत्य शब्दकौस्तुभस्य रचनां व्यधत्त, इति। **'अतो लोपः'** ६।४।५८। अस्य सूत्रस्य प्रौढमनोरमाऽऽख्यव्याख्यया तथा तत्र कृतया शब्दरत्नव्याख्यया च सुस्पष्टमिदमनुभूयते यत् शब्दकौस्तुभस्य रचना अष्टाध्याय्याः षष्ठाध्यायपर्यन्तं नूनं सञ्जातेति।

भट्टोजिदीक्षितस्य पूर्वोक्तग्रन्थत्रयादतिरिक्तं **'वेदभाष्यसार'**-नामको ग्रन्थः समुपलब्धः। यस्य प्रकाशनं 'भारतीयविद्याभवनबम्बई'तः समभवत्। ग्रन्थोऽयम् ऋग्वेदस्य प्रथमाध्यायमाधारीकृत्य लिखितो विराजते।

**शब्दकौस्तुभस्य टीकाकाराः**—१. नागेशः, २. वैद्यनाथपायगुण्डे, ३. विद्यानाथशुक्लः, ४. राघवेन्द्राचार्यः, ५. कृष्णमित्रः, ६. भास्करदीक्षितश्च। अयं हि कृष्णमित्र. कृष्णाचार्यनाम्नाऽपि प्रथितिं लब्धवान्।

**शब्दकौस्तुभस्य खण्डनकर्ता**—पण्डितराजजगन्नाथस्य भट्टोजिदीक्षितेन सह कारणवशाद् अहिनकुलवद् विरोधिता कृतपदा समभूत्। तदनु पण्डितराजजगन्नाथेन प्रौढमनोरमायाः खण्डनं लक्ष्यीकृत्य 'मनोरमाकुचमर्दनम्' नाम ग्रन्थरत्नमकारि। तदित्थम्—इत्थं च **'ओत्'** सूत्रगतः कौस्तुभग्रन्थः सर्वोऽप्यसङ्गत इति ध्येयम्। **अधिकं** कौस्तुभखण्डनादवधेयम्'।

**सिद्धान्तकौमुदी**—श्रीमान् भट्टोजिदीक्षितः पाणिनीये व्याकरणे **सिद्धान्तकौमुदी-नाम्नीं** प्रयोगक्रमानुसारिणीं व्याख्यां रचयामास। इतः पूर्वं **रूपावतारे, रूपमालायां प्रक्रियाकौमुद्यां** च अष्टाध्याय्याः समेषां सूत्राणां सन्निवेशो नैवावलोक्यते स्म। अस्य पूर्तौ दीक्षितमहोदयः पूर्णतया साफल्यमवाप। अमुष्य ग्रन्थस्य प्रचारः प्रसारश्च देशे विदेशे च समानरूपेण विजृम्भते।

**सिद्धान्तकौमुद्या व्याख्यातारः**—ग्रन्थनिर्माता एवास्य प्रथमो व्याख्याता। दीक्षितकृता व्याख्या **प्रौढमनोरमा**-नाम्ना विदितास्ति लोके। अत्र प्रक्रियाकौमुद्यास्तथा तस्याष्टीकानां च स्थाने-स्थाने खण्डनं विहितमनेन।

**प्रौढमनोरमा**—अस्याः संवत् १७०८ कालिको हस्तलेखः, 'पूनानगरस्थभाण्डारकरप्राच्यविद्याप्रतिष्ठाने' सुरक्षितः। अद्यापि तत्र द्रष्टुं पार्यते ससुखम्।

**प्रौढमनोरमाग्रन्थे**—भट्टोजिदीक्षितस्य पौत्रो हरिदीक्षितः बृहच्छब्दरत्नं लघुशब्दरत्नं च व्याख्याद्वय व्यधत्त। केचन विद्वांसः कथयन्ति यत् **लघुशब्दरत्न**-नाम्नी व्याख्या नागेशभट्टकृता। स एतस्य श्रेयः स्वकीयाय गुरवे प्रादात्, इति।

**ज्ञानेन्द्रसरस्वती**—अस्य समयः १५५०-१६०० वि० सं० यावत्

स्वीक्रियते। अयं महानुभावः सिद्धान्तकौमुदीग्रन्थे **तत्त्वबोधिनी**-नाम्नीं वृत्तिं चकार। अत्र सूक्ष्मेक्षिकया विलोकनेन अनुमीयते यत् प्रौढमनोरमाया एव संक्षेपः, तत्त्वबोधिनी टीका। ज्ञानेन्द्रस्य गुरुः वामनेन्द्रसरस्वतीति प्रसिद्धः, अस्य शिष्यो नीलकण्ठवाजपेयीति।

**गूढार्थदीपिका**—तत्त्वबोधिनीव्याख्यां विशदयितुकामेन नीलकण्ठवाजपेयिना **गूढार्थदीपिका**-नाम्नी तत्र व्याख्या लिखिता। सः स्वकीयायां परिभाषावृत्तौ लिखति—'अस्मद् गुरुचरणकृततत्त्वबोधिनीव्याख्याने गूढार्थदीपिकाख्याने प्रपञ्चितम्'। अयमेव महानुभावः सिद्धान्तकौमुद्यामपि **सुखबोधिनी** व्याख्यां विरचितवान्।

**तत्त्वदीपिका**—सरयूपारीणो रामानन्दब्राह्मणः सिद्धान्तकौमुद्यां **तत्त्वदीपिकाऽऽख्यां** व्याख्यां कृतवान्। एषा व्याख्या हलन्तस्त्रीलिङ्गप्रकरणं यावदेव प्राप्यते।

**रत्नाकराख्या व्याख्या**—रामकृष्णभट्टः सिद्धान्तकौमुद्यां **रत्नाकर**-नाम्नीं व्याख्यां लिखितवान्। अस्य पिता तिरुमलभट्टः। समयश्चास्य वि० सं० १७२५ यावत्।

**नागेशभट्टः**—अयमपि सिद्धान्तकौमुदीमधिकृत्य व्याख्याद्वयं व्यधत्त। तयोर्नामनी–१. बृहच्छब्देन्दुशेखरः, २. लघुशब्देन्दुशेखरश्च। बृहच्छब्देन्दुशेखरः सर्वप्रथमं काशीतः प्राकाश्यपदवीमुपनीतः। अस्य समयः वि० सं० १७३०-१८१० यावत्।

**बालमनोरमा**—सिद्धान्तकौमुद्यां वासुदेववाजपेयीकृता **बालमनोरमा** व्याख्या सुप्रसिद्धा। अस्य समयः वि० सं० १७४०-१८०० यावत्। सुप्रसिद्धेऽस्मिन् ग्रन्थरत्ने अन्या अपि बह्व्यष्टीकाः सन्ति। तासां कतिपयनामानि निर्दिश्यन्ते–१. कृष्णमित्रकृता रत्नार्णवव्याख्या, २. तिरुमलद्वादशाहयाजीकृता सुमनोरमा, प्रभृतयः समुपलभ्यन्ते। विस्तरेण भट्टोजिदीक्षितकृतग्रन्थानां विषये व्याकरणशास्त्रस्येतिहासे द्रष्टव्यम्।

—: ० :—

## कैयटः

महाभाष्ये प्रदीपाभिधायाष्टीकायाः कर्त्रा कैयटेन महती ख्यातिः समुपलब्धा स्वकीययाऽनया व्याख्यया । महाभाष्ये भर्तृहरिविरचिताया दीपिकाया व्याख्याया अनन्तरमेतस्या एव महत्त्वपूर्णं स्थानं वर्वर्ति ।

**वंशादिपरिचयः**–महाभाष्ये प्रदीपनामिकाया व्याख्याया अध्याया-ऽन्ते 'इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे' इति लिखितमस्ति । येन साटोपं वक्तुं शक्यते यत् कैयटस्य पिता **जैयटोपाध्याय** आसीदिति ।

मम्मटाचार्यविरचितस्य काव्यप्रकाशस्य सुधासागरटीकायां भीमसेनः कैयटम् उव्वटं च मम्मटस्य लघुभ्रातेति लिखितवान् । यजुर्वेदभाष्यस्य समाप्तौ श्रीमान् उव्वटः स्वकीयपितुर्नाम **वज्रट** इति समुट्टङ्कितवान् । भीमसेनस्यायं निर्देशः प्रमाणकोटिं नावगाहते । यतोहि भीमसेनस्य समयः सं० १७७९ इति । अनुमीयते यत् सः समानाकृतिनामवर्णान् कैयट-उव्वट-मम्मटप्रभृतीन् विलोक्यैव भ्रान्तः ।

**गुरुः**–डा० वेल्वाल्करः कैयटस्य गुरुः **महेश्वर** आसीदिति निर्दि-शति । अस्योल्लेखः—'**सिस्टम-आफ-संस्कृतग्रामर**'-ग्रन्थस्य २८तमे वाक्योच्चयेऽस्ति ।

**शिष्यः**–कैयटेन प्रदीपाख्यायाः टीकायाः सदुपदेशो येभ्यः शिष्येभ्यो विहितस्तेष्वन्यतमः **उद्योतकरः** । अन्येषां नाम्नां परिज्ञानं गवेषणामपेक्ष्यते । अयं नैयायिकाद् उद्योतकरात् सर्वथा भिन्न एव । कैयटशिष्येण उद्योतकरेण व्याकरणशास्त्रे कोऽपि ग्रन्थो निर्मितः । तस्य कानिचिद् उद्धरणानि चन्द्रसागरसूरिणा हैमवृहद्वृत्तेः आनन्दबोधिनी-टीकायां सङ्गृहीतानि सन्ति ।

**देश**:–श्रीमान् कैयटः स्वजनुषा कं देशविशेषं गौरवान्वितं चकारेति सर्वथा दिग्भ्रान्ता इव विदुषो विषयेऽस्मिन् । इदमनुमीयते यदयं **काश्मी-राभिजनः** । वाराणसेया विद्वांसः परम्पराज्ञानबलेन च कथयन्ति यत् कैयटः पूर्वं काशी पण्डितसभायां कस्मिन्नपि शास्त्रार्थे सम्मिलितो

बभूव इति। तदानीं सः पादयाम( पायजामा )परिधानयुक्त आसीद्, धौतवस्त्रधारिणां काशीवासिपण्डितानां समाजे। इतः पूर्वं न कोऽपि तत्र अवधानं ददौ, किन्तु यदा तेन प्रस्तूयमानस्य शास्त्रीयविषय-विशेषस्य समाधानं दत्तं तदा सा पण्डितमण्डली कोऽयं, कुतोऽयं, कुत्र-त्योऽयमिति पृच्छापरवशा समभवत्।

अपरमपि प्रमाणमुपायनीक्रियते विदुषां पुरस्तात्—'वृक्षस्थोऽवतानो वृक्षे छिन्नेऽपि न नश्यति'—महाभाष्ये १।२।६४। अस्य व्याख्याने कैयटो लिखति—'यथा वृक्षोपरि द्राक्षादिलता···'। काश्मीरे द्राक्षा-लतायाः सद्भावाद् दृष्टान्तमिदं प्रमाणयति यदयं काश्मीरदेशवासीति।

**समयः**—कैयटः स्वविषये कुत्रापि किमपि नासूचयत। अत एतस्य सम्बन्धे सर्वमज्ञातमेव। अमरकोषस्य सर्वानन्दकृता टीकासर्वस्वव्याख्या १२१६ वि० सं० लिखिताऽस्ति। तत्राऽयं मैत्रेयरक्षितरचितं धातुप्रदीपम् उद्धरणे प्रस्तौति। अनेन विज्ञायते कैयटः ११०० वि० सं० पूर्वतन एव।

इतः परं यदा वयं हरदत्तरचितायाः पदमञ्जर्यास्तथा कैयट-रचितायाः महाभाष्यप्रदीपव्याख्यायास्तुलना कुर्मः, तदा प्रतीयते यद् बहुषु स्थलेषु उभयोरपि ग्रन्थांशाः साम्यं बिभ्रति। एतयोर्ग्रन्थांशानां पर्यालोचनेन निश्चीयते यत् कैयटः हरदत्ततः प्राचीन इति। तथाऽप्यत्र तेषां तेषां काल-सीमा निर्दिश्यते ये परस्परं समकालिकानां विदुषां ग्रन्थांशान् प्रमाणाय समुद्धरन्ति। यथा—

| ग्रन्थकारः | ग्रन्थनाम | समयः |
|---|---|---|
| सर्वदानन्दः | टीकासर्वस्वम् | १२१५ वि० सं० |
| मैत्रेयरक्षितः | धातुप्रदीपः | ११६५ ,, |
| धर्मकीर्तिः | रूपावतारः | ११४० ,, |
| हरदत्तः | पदमञ्जरी | १११५ ,, |
| कैयटः | महाभाष्यप्रदीपः | १०९० ,, |

**महाभाष्यप्रदीपः**—कैयटः स्वकीयव्याख्यायाः प्रारम्भे निर्दिशति, यदियं व्याख्या भर्तृहरिनिबद्धेन सारेण ग्रन्थसेतुना रचिताऽस्ति। तर्हि अत्र प्रयुक्तः सारशब्दस्यायमभिप्रायः भर्तृहरिविरचितेन वाक्यपदीयेन

सह सम्बन्धं स्थापयति। कैयटः सम्पूर्णे महाभाष्यप्रदीपे केवलमेकत्र महाभाष्यदीपिकां सङ्केतयति। **तद्यथा**--'विस्तरेण भर्तृहरिणा प्रदर्शित ऊहः' नवाह्निके।

महाभाष्यग्रन्थस्य सम्यगवबोधाय महाभाष्यप्रदीपनाम्नी व्याख्या सुतरां श्रेयस्करी। अत एव पाणिनीये सम्प्रदाये कैयटकृतमहाभाष्यप्रदीपस्य महन्महत्त्वं विराजते।

**प्रदीपस्य टीकाकाराः**—महाभाष्यस्य परिज्ञानाय प्रदीपस्य परमावश्यकता भवति। अतो बहुभिर्वैयाकरणैरत्र व्याख्याः कृताः। तेषां नामानि समुद्ध्रियन्तेऽत्र—१. चिन्तामणिः, २. शेषनाथः, ३. मल्लययज्वा, ४. रामचन्द्रसरस्वती, ५. ईश्वरानन्दसरस्वती, ६. अन्नम्भट्टः ७. नारायणः, ८. रामसेवकः, ९. नारायणशास्त्री, १०. नागेशभट्टः, ११. प्रवर्तकोपाध्यायः, १२. सर्वेश्वरसोमयाजी, १३. हरिरामश्च।

—:०:—

## हेमचन्द्रसूरिः

जैनधर्मावलम्बिनां सुप्रसिद्ध आचार्यो हेमचन्द्रसूरिः **'सिद्धहेमशब्दानुशासनं'**-नाम साङ्गोपाङ्गं व्याकरणग्रन्थं रचयामास।

**वंशादिपरिचयः**—अस्य पितुर्नाम **चाचिगः चाचः** वा आसीत्तथा मातुर्नाम **पाहिणी पाहिनी** वेति। अमुष्य पिता वैदिकीं परम्परामवलम्बते स्म, अस्य माता जैनमते आग्रहवती बभूव। एतस्य जन्म मोढवंशीये वैश्यकुले समभवत्।

**जन्मतिथिः**—हेमचन्द्रसूरिः कार्तिकमासे पूर्णिमायां ११४५ वैक्रमाब्दे समुत्पन्नः। अस्य जन्मनाम **चांगदेवः** किंवा **चंगदेव** आसीत्।

**जन्मस्थानम्**—इतिहासविदां मते हेमचन्द्रसूरेर्जन्म **धुन्धुक**-मण्डले किं वा **धन्धुका**-मण्डले **अहमदाबाद**-नगरे समभवत्।

**गुरुः**—अस्य गुरुः **चन्द्रदेवसूरिः** आसीत्। केचन **देवचन्द्रसूरिरिति**

स्वीकुर्वन्ति। अयं महानुभावः श्वेताम्बरसम्प्रदायान्तर्गताया वज्र-शाखाया आचार्य आसीत्।

**दीक्षाप्रसङ्गः**—एकदा अयं स्वमात्रा सह जैनमन्दिरं गच्छन् चन्द्र-सूरिं ददर्श। चन्द्रदेवः विलक्षणप्रतिभाशालिनं भविष्णुं च चांगदेवं विज्ञाय तस्मै स्वधर्मग्रन्थानुपदेष्टुकामस्तस्य मातरं तं ययाचे, मातापि श्रद्धाभावेन स्वं पुत्रं सादरं तस्मै समर्पितवती, तदानीं चांगदेवस्य पिता परदेशं गतोऽभूत्। दीक्षाप्राप्तेरनन्तरं चांगदेवस्य नाम **सोमचन्द्र** इति-कृतः, मेरुतुङ्गसूरिमते अस्मै दीक्षा वि० सं ११५४ माघशुक्ले ४ शनौ नवमे वर्षे प्रदत्ता, इति। अपरे विद्वांसः सूरिपदस्य प्राप्ति वि० सं० ११६६ वैशाखशुक्ले ३ तिथौ मध्याह्नसमये २१ वर्षे निर्दिशन्ति।

**वैदुषी**—जैनश्वेताम्बरसम्प्रदायस्य लेखकेषु हेमचन्द्रस्य महोच्चं स्थानं जागर्ति। विद्वानयं व्याकरण-न्याय-च्छन्द-काव्य-धर्मप्रभृतिग्रन्थेषु स्वकीयां समर्थां लेखनीं व्यापारयामास, जैनमतस्य प्रचारं च चकार।

**हैमशब्दानुशासनस्य रचना**—गुर्जरप्रदेशस्य सम्राट्सिद्धराजस्य निर्देशमुररीकृत्य हेमचन्द्रः शब्दानुशासनस्यास्य निर्माणमकरोत्। अयं हि सिद्धराजः जयसिंहनाम्नाऽपि विदितोऽभूत्। अस्य समयः वि० सं० ११५०–११९९ यावदस्ति। शब्दानुशासनमिदं संस्कृतभाषां प्राकृत-भाषां च शास्ति।

**ग्रन्थपरिचयः**—हैमशब्दानुशासनस्य प्रारम्भतः सप्ताध्यायानां २८ पादेषु संस्कृतभाषाया व्याकरणं जागर्ति। अत्र ३५६६ सूत्राणि सन्ति। अष्टमेऽध्याये प्राकृत-शौरसेनी-मागधी-पैशाची-चूलिका-पैशाची तथा अपभ्रंशप्रभृतीनाम् अनुशासनं राराज्यते, अष्टमाध्यायस्य सूत्रसङ्ख्या १११९ अस्ति। चन्द्रसागरसूरेः मतानुसारं हेमचन्द्रो हैमव्याकरणस्य रचनां वि० सं० ११९३-११९४ वर्षे चकार।

हैमव्याकरणस्य रचनाक्रमः प्राचीनशब्दानुशासनानि नानुहरति। अस्य रचना कातन्त्रनिभा प्रकरणानुसारिणी वर्वर्ति। अत्र यथास्थानं संज्ञा, स्वरसन्धिः, व्यञ्जनसन्धिः, नामः, कारकाणि, षत्वं, स्त्रीप्रत्ययः, समासः, आख्यातः, कृदन्तः, तद्धितः, इति प्रकरणानि विलसन्ति।

**हैमव्याकरणस्य व्याख्यातारः**—हेमचन्द्रः स्वकीयरचितेषु सर्वेषु ग्रन्थेषु स्वोपज्ञां वृत्तिं निबबन्ध, अस्य टीकाक्रमः बृहतीवृत्तिः, मध्यमावृत्तिः, लघ्वीवृत्तिः, एवमेता वृत्तयस्त्रिधा विभक्ताः, हेमचन्द्रादतिरिक्ता बहवो व्याख्यातारोऽस्य कृतीनां सन्ति येऽत्र निबन्धगौरवात् त्यज्यन्ते ।

**हेमशब्दानुशासने स्मृता आचार्याः**–अस्मिन् व्याकरणे तथा अमुष्य वृत्तिषु येषाम् आचार्याणां नामानि समुपलभ्यन्ते तानि यथा—आपिशलिः, यास्कः, शाकटायनः, गार्ग्यः, वेदमित्रः, शाकल्यः, इन्द्रः, चन्द्रः, शेषभट्टारकः, पतञ्जलिः, वार्तिककारः, पाणिनिः, देवनन्दी, जयादित्यः, वामनः, विश्रान्तविद्याधरकारः, विश्रान्तन्यासकारः, जैनशाकटायनः, दुर्गसिंहः, श्रुतपालः, भर्तृहरिः, क्षीरस्वामी, भोजः, नारायणकण्ठी, सारसङ्ग्रहकारः, द्रमिलः, शिक्षाकारः, उत्पल उपाध्यायः ( कैयटः ), जयन्तीकारः, न्यासकारः, पारायणकारश्च ।

—: ० :—

## व्याडिः

परममाहेश्वरः पाणिनिः स्वकीयायामष्टाध्याय्यां येषां वैयाकरणानां नामोल्लेखं न कृतवांस्तेषु व्याडिः अन्यतमः । पुरुषोत्तमदेवो भाषावृत्तौ व्याडिमेवं सस्मार–'इकां यण्भिर्व्यवधानं व्याडिगालवयोरि'ति, जयादित्यः काशिकावृत्तौ—'व्याड्युपज्ञं दुष्करणम्' । पतञ्जलिर्महाभाष्येऽस्य नामोल्लेखं चकार । तद्यथा—'आपिशलपाणिनीयव्याडीयगौतमीया' । एव-काऽपि विप्रतिपत्तिः सुधीसमाजे ।

**परिचयः**—पुरुषोत्तमदेवः त्रिकाण्डशेषे व्याडेर्नामत्रयं स्वीकरोति, यथा—१. विन्ध्यस्थः, २. नन्दिनीसुतः, ३. मेधावी च, आचार्यो हेम-

चन्द्रसूरिः 'अभिधानचिन्तामणौ' **विन्ध्यवासी**, केशवः 'कल्पद्रुमे' **विन्ध्य-निवासीति** अस्य नाम मनुते, एतन्नामत्रयं सर्वथा समानार्थकमेव, नन्दिनीसुतनाम्नश्चर्चा नान्यत्र दृग्गोचरीभवति। भामहः स्वकीयेऽल-ङ्कारशास्त्रे **मेधाविनम्** अलङ्कारशास्त्रकर्तृरूपेण स्मरति।

**प्रतिवादः**—दाक्षिणात्यो **व्याडिः** दाक्षायणनाम्नाऽपि सुविदितः किन्तु पुरुषोत्तमदेवप्रभृतिभिर्ये पर्याया व्याडिपरिचायकाः प्रस्तुतीकृता-स्तेषु दाक्षायणेति पर्यायस्याऽभावेन न ते श्रद्धेयाः। इतिहासे व्याडि-नामका बहव आचार्याः सुप्रसिद्धाः।

**व्याडिशब्दस्याऽर्थः**-धातुवृत्तिकारः सायणो धातुवृत्तौ व्याडिशब्द-व्याख्यानमित्थं प्रस्तौति–अडो **वृश्चिकलाङ्गूलं, तेन च तैक्ष्ण्यं लक्ष्यते।** विशिष्टोऽडस्तैक्ष्ण्यमस्य व्यडः, तस्यापत्यं व्याडिः। **'अत इञ्'** स्वा-गतादीनां चेति, वृद्धिप्रतिषेधै जागमयोर्निषेधः।

**वंशः**—अपत्यप्रत्ययानुरोधेन 'व्यडस्याऽपत्यं पुमान् व्याडिः' इति सिद्धयति, अतो व्याडेः पितुर्नाम **व्यड** इति प्रतीयते। मातुर्नाम अन्वि-ष्यापि न लभते। दाक्षि दाक्षायणेति नामद्वयमधिकृत्य अनुमीयते यदस्य मूलपुरुषस्य नाम दक्ष इति। मत्स्यपुराणे १९५।२५। दाक्षिः, अङ्गिरा वंशीयो निर्दिष्टः। न्यासकारो जिनेन्द्रबुद्धिः दाक्षायणापरपर्याय व्याडिं ब्राह्मण-वंशीयं मनुते।

**व्याडेः स्वसा**—पाणिनिः क्रौडयादिगणे व्याडिं पपाठ, तदनुसार तस्य स्वसा **व्याडी** इति प्रतीयते। अनेन प्रकारेण स्थिरसम्बन्धे सति पाणिनिः व्याडयाः भागिनेयो भाव्यः।

**देशः**—यथा पूर्वमस्माभिः पुरुषोत्तमदेवकृतेषु पर्यायेषु ऐतिहासिक दृष्टया अनास्था प्रदर्शिता, तथैव देशविषयेऽपि। दाक्षायणानां कुलप-रम्परा विस्तृता समृद्धा चासीत्। तत् स्थानं १. **दाक्षकः** २. **दाक्षायण** भक्त-नामभ्यां सुप्रसिद्धमासीत्, अस्योल्लेखः पाणिनेरष्टाध्याय्य वर्तते। क्रमेण—१. अष्टा० ४।२।५३।।२. अष्टा० ४।२।५४।। काशि कायां केषाञ्चन ग्रामाणां नामानि दृश्यन्ते। यथा—१. दाक्षिपल

दाक्षिनगर, दाक्षिग्राम, दाक्षिह्लद, दाक्षिकन्था प्रभृतयो ग्रामाः। इमे ग्रामाः काशिकाया अनुसारं सतलज-सिन्धुनद्योर्मध्ये आसन्।

**व्याडिशाला**—पाणिनेरष्टाध्याय्यां छात्र्यादिगणे व्याडिपदस्य निर्देशः सुलभः। अतोऽनुमीयते तदानीं व्याडिविद्यालयः प्रसिद्धेः पराकाष्ठामवगाहतेस्म।

आचार्यव्याडेः परिचयः सङ्ग्रहकाररूपेण सुधीसंसदि प्रसिद्धः। महाराजः समुद्रगुप्तः स्वकीयकृष्णचरितस्य प्रस्तावनायां मुनि-कवि-वर्णनप्रसङ्गे निर्दिष्टवान् यद्, व्याडिः कविः, मीमांसकः, वैयाकरणः, रसाचार्यश्चासीदिति। तद्यथा—

'रसाचार्यः कविर्व्याडिः शब्दब्रह्मैकवाङ्मुनिः।
दाक्षीपुत्रवचो व्याख्यापटुर्मीमांसकाग्रणीः॥'

**समयः**—अस्य समयो महाभारतयुद्धादनन्तरं १००-२०० वर्ष-मध्यकालिक एव निश्चीयते ऐतिह्यविद्भिर्विद्वद्भिः।

**कृतयः**-यद्यप्येतस्य सङ्ग्रहग्रन्थः सम्प्रति नोपलभ्यते, तथापि 'वाक्यपदीय'-टीकाकारस्य पुण्यराजप्रदत्तप्रमाणैः, नागेशस्य च समुद्धरणैः प्रतीयते यत्तस्य लक्षैकात्मिका श्लोकसङ्ख्याऽऽसीदिति महाभाष्यकारवचोभिर्वयम् अनुभवं कुर्मः। यद् यस्य प्रशंसक एतादृङ्मनीषी स्यात् स सङ्ग्रहो नूनं श्लाघ्य एव। व्याडिकृतसङ्ग्रहग्रन्थस्य कानिचन वचनानि पण्डितप्रवरो मीमांसकमहाभागः समुद्धृतवान् स्वकीयेतिहासग्रन्थे। तस्य अन्याः कृतयः--बालचरितमहाकाव्यम्, अमरकोषटीका, परिभाषापाठः, व्याडीयपरिभाषावृत्तिः, लिङ्गानुशासनं, विकृतिवल्ली, कोषप्रभृतिग्रन्थाश्चासन्।

आचार्यव्याडेः सुप्रसिद्धं पद्यमेकं समुद्ध्रियतेऽत्र यत् सर्वदा विदुषामास्यरङ्गे लास्यं तन्वन् न कदाचित् श्रममुपयाति। तद्यथा—

'ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ॥' इति॥

—:०:—

## जिनेन्द्रबुद्धिः, न्यासकारः

काशिकाव्याख्यातृषु मौलिमाणिक्यायमाणो जिनेन्द्रबुद्धिः न्यासकारनाम्ना परां प्रसिद्धिं प्राप। अद्यावधि यावत्यो व्याख्याः काशिकायामुपलब्धास्तेषु जिनेन्द्रबुद्धिविरचिता **काशिकाविवरणपञ्जिका** व्याख्या सर्वतोऽधिका प्रामाणिका प्राचीना च। अस्या एवाऽपरं नाम न्यास इति।

**समयः**–प्राचीनां परम्परामनुसृत्य जिनेन्द्रबुद्धिनाऽपि स्वकीयपरिचयादिविषये स्तोकमपि न सङ्केतितम्। अतोऽस्य समयादिसम्बन्धे न किमपि निर्दिश्यते। अयं मनीषी बौद्धमतानुयायीति लोकप्रसिद्धिः। अस्य स्थितिकालः प्रायो विक्रमशताब्देरष्टमो (७८२-८०७ वि० सं०) भाग इति न्यासग्रन्थसम्पादकः श्रीशचन्द्रचक्रवर्ती स्वीकरोति।

महाभाष्यस्य व्याख्याता कैयटः श्रीमतो हरदत्तात् पूर्वकालिकः, इति विद्वद्भिः स्वीक्रियते। कैयटस्य जिनेन्द्रबुद्धेश्च ग्रन्थांशाः बहुत्र सङ्गच्छन्ते। तत्रैव प्रतिभाति यदिमौ परस्परं पोषयन्तौ किंवा अन्योन्यमनुकुर्वन्तौ विचरत इति।

डा० याकोबी भविष्यत्पुराणमाधारीकृत्य हरदत्तस्य देहावसानसमयं वि० सं० ९३५ इति स्वीकरोति। यदि तिथिरेषा प्रमाणान्तरैः पुष्टिं याति चेत् तदा जिनेन्द्रबुद्धेः समयः वि० सं० ९०० पूर्वं स्वीकर्तव्यः।

महाकविर्माघः शिशुपालवधमहाकाव्ये 'अनुत्सूत्रपदन्यासा' इति पद्यांशमुद्धृत्य न्यासशब्दस्य प्रयोगं प्रदर्शितवान्। न्यासग्रन्थस्य सम्पादकः निर्दिशति यद् कविवरो माघः न्यासकारस्य परवर्ती इति। एतत्तथ्यम, किन्तु नैष विषयः समादरणीयो यत् सर्वप्रथमो न्यासकारो जिनेन्द्रबुद्धिरेवेति। अवदधतु विद्वांसः! भर्तृहरिरचितमहाभाष्यदीपिकायामपि कस्यचन न्यासग्रन्थस्य चर्चा दृश्यते, स नूनं जिनेन्द्र बुद्धितः पूर्वकालिकः। आचार्यो देवनन्दी पाणिनीयाष्टके शब्दावतार नामकं न्यासग्रन्थं रचयामास। नूनं स कोऽपि न्यासग्रन्थो माघकवे पूर्वकालिकः, यस्य चर्चा माघकविं पद्यबन्धनाय प्रेरितवती।

प्रसङ्गप्राप्ताः केचन न्यासस्य व्याख्यातारः परिगण्यन्ते, यैस्तत्र श्रमेण बुद्धिविन्यासः पदन्यासश्च कृतः। यैस्ततः संन्यासः स्वीकृतस्ते चर्चा तु केवलं भारायेति कृत्वाऽत्र त्यक्ता। जैनेन्द्रशब्दानुशासनस्य रचयिता **देवनन्दी** पाणिनीये व्याकरणे **शब्दावतारन्यास**-नाम्नीं व्याख्यां ततान। यस्य विषये **शिमोगामण्डलस्य** ४३तमे शिलालेखे पद्यमेकं प्राप्यते—

'न्यासं जैनेन्द्रसंज्ञं सकलबुधनुतं पाणिनीयस्य भूयो
न्यासं शब्दावतारं मनुजततिहितं वैद्यशास्त्रं च कृत्वा।
यस्तत्त्वार्थस्य टीकां व्यरचयदखिलां भात्यसौ पूज्यपादः
स्वामी भूपालवन्द्यः स्वपरहितमतिः पूर्णदृग्बोधवृत्तः॥'

इतः परमनेन **जैनेन्द्रन्यास**-नामको ग्रन्थोऽपि रचितः। मल्लिनाथः कवीन्द्रः **न्यासोद्योत**-नाम्नीं टीकां तत्र बबन्ध। स स्वयं किरातार्जुनीयस्य टीकायां न्यासोद्योतस्य उद्धरणानि प्रदर्शयामास। नरपतिमहामिश्रः न्यासग्रन्थे **न्यासप्रकाश**-नाम्नीं व्याख्यां कृतवान्। अस्य सङ्ग्रहः जम्मूनगरस्य रघुनाथमन्दिरे वर्तते। पुण्डरीकाक्षविद्यासागरः न्यासस्य अज्ञातनाम्नीं काञ्चन व्याख्या रचयामास। यस्या उल्लेखो ग्रन्थकर्त्रा कातन्त्रप्रदीपनासिकायां कातन्त्रस्य टीकायां विहितमस्ति। इन्दुमित्रः काशिकामधिकृत्य **अनुन्यास**-नाम्नीं व्याख्यां रचयामास। अस्या उद्धरणानि बहुत्र उपलभ्यन्ते। श्रीमानशर्मा— **अनुन्याससार**-नामकं कमपि ग्रन्थं व्यधात्। कोऽपि अज्ञातनामा वैयाकरणः काशिकायां **महान्यास**-नाम्नीं टीकां चक्रे। यस्योद्धरणानि उज्ज्वलदत्तस्य उणादिवृत्तौ, सर्वानन्दकृते अमरटीकासर्वस्वे च उपलभ्यन्ते।

---

## हरदत्तमिश्रः

काशिकायां **पदमञ्जरी**-व्याख्याः कर्ता मिश्रोपाख्यो हरदत्तः प्रकाण्डपण्डित आसीत्। अस्या व्याख्याया अवलोकनेन मिश्रमहोदयस्य योग्यतायाः सम्यग्ज्ञानं बोभवीति। अयं न केवलं वैयाकरणः, अपितु श्रौत-गृह्य-धर्मशास्त्राणामपि विद्वान्, यत्र तत्र अनेन गौरवपूर्णा वृत्तयो निबद्धाः। लोलिम्बराज-पण्डितराजादिवद् आत्मश्लाघाप्रियोऽप्ययमासीत्। अयं पदमञ्जर्याः प्रथमे भागे स्वपरिचयात्मिकां गर्वोक्तिं प्रादर्शयन् एवं लिखति—

'प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः।

हरदत्तहरिः स्वैरं विहरन् केन वार्यते ॥'--प० मं० १। ४९।

**अपरमपि**---

'एवं प्रकटितोऽस्माभिर्भाष्ये परिचयः परः।

तस्य निश्शेषतो मन्ये प्रतिपत्ताऽपि दुर्लभः ॥'--पदमञ्जरी।

तदनु पारिवारिकं परिचयं प्रस्तौति—

'तातं पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा।
ज्येष्ठं चाग्निकुमाराख्यमाचार्यमपराजितम् ॥'--पदमञ्जरी।

अस्य पिता पद्मकुमारः ( रुद्रकुमारो वा ), माता 'श्रीः', ज्येष्ठभ्राता 'अग्निकुमारः' गुरुश्च 'अपराजित' आसीत्।

**सम्प्रदायः**—हरदत्तः पदमञ्जर्याः प्रथमे पद्ये मङ्गलाचरणरूपेण साम्बं शिवं प्रणनाम। यथा—

'तस्मै शिवाय परमाय दशाव्ययाय।
साम्नाय सादरमयं विहितः प्रणामः' ॥

अनेन सिद्ध्यति यदयं शैवमतानुयायी इत्यासीत्।

**देशः**—ग्रन्थस्यारम्भे हरदत्तः आत्मानं दक्षिणदेशवासीति कथयति। तद्यथा—'यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः'—पदमञ्जरी पृ० १। अस्यैव ग्रन्थस्य द्वितीयभागे पृ० ५१९ लिखितमस्ति यदयं हरदत्तः द्रविडदेशवासी चोलदेशान्तर्गतः कावेरीनद्यास्तटभागस्थितो द्रविडभाषाभाषी च आसीत्। केचन आचार्या एनम् आन्ध्रप्रदेशीयं मन्वते किन्त्विदं कश्चन द्रविडदेशीयम् आन्ध्रप्रदेशवासीति कथनं सर्वथा दुष्करमेव।

तात्पर्यमिदमस्ति यद् हरदत्तः आन्ध्रप्रदेशस्य **कूचिमञ्चि-अग्रहारस्य** निवासी आसीत्। पदमञ्जर्याः उत्तरार्धस्य रचनाकाले सः द्रविडदेशं गतवानिति, तदनु शेषं समग्रजीवनं चोलदेशे कावेरीनद्यास्तटे यापयामास।

**समयः**—श्रीमान् हरदत्तः स्वकीये ग्रन्थे कालनिर्णयात्मकं किमपि वृत्तजातं नैव लिखितवान्, येन वयं तस्य समयादिसूचनाकर्मणि समर्थाः स्याम। इतः पूर्वं कैयटस्य कालनिर्णयार्थमस्माभिः किमपि विचारितं तदनुसारं हरदत्तस्य समयः वि० सं० १११५ प्रायः सम्भाव्यते। ये पुनः हरदत्तमैत्रेयरक्षितयोः समकालिकतां स्वीकुर्वन्ति, ते स्वयं भ्रान्ताः परान् भ्रामयन्ति।

**रचनाः**—पदमञ्जर्याः १।१।२०। द्विसप्ततितमे पृष्ठे **महापदमञ्जरी**-नाम्नी व्याख्या हरदत्तेन रचितेति सूचितम्। केन ग्रन्थेन सह एतस्या व्याख्यायाः सम्बन्ध इति नाद्यावधि अस्माभिर्ज्ञायते। अपरा च अनेन **परिभाषाप्रकरण**-नाम्नी परिभाषावृत्तिरपि लिखिता, एषाऽपि अप्राप्या एव। अन्याः कृतयः—१. आश्वलायनगृह्यव्याख्या, २. गौतमगृह्यसूत्रव्याख्या, ३. आपस्तम्बगृह्यसूत्रव्याख्या, ४. आपस्तम्बधर्मसूत्रव्याख्या, ५. आपस्तम्बगृह्यमन्त्रव्याख्या, ६ आपस्तम्बपरिभाषाव्याख्या, ७. एकाग्निकाण्डव्याख्या, ८. श्रुतिसूक्तिमाला च।

केचन विद्वांस परस्परं विवदन्ते यदयं हरदत्तः पदमञ्जरीकाराद् भिन्न इति, अन्तःसाक्ष्यस्याऽभावात् न तद्वचनं श्रद्धेयम्।

**पदमञ्जर्याः व्याख्यातारौ**—चोलदेशीयो रङ्गनाथयज्वा पदम-

ञ्जर्यां **मञ्जरीमकरन्द**-नाम्नीं व्याख्यां लिलेख । अयं हस्तलेखो 'तञ्जौरस्थ-राजकीयपुस्तकालये' द्रष्टुं शक्यते । अपरो विद्वान् शिवभट्टः पदमञ्जर्यां **कुङ्कुमविकास**-नाम्नीं व्याख्यां निबबन्ध । एषा सूचना **आफ्रेक्टसूचीपत्रे** सुलभा ।

---

## शब्दस्वरूपवर्णनम्

सामान्यतः शब्दः पञ्चविधः । यथा—१. धातुः, २. नाम, ३. अव्ययम्, ४. उपसर्गः, ५. निपातश्च । महर्षिः पाणिनिरेतान् शब्दान् कोटिद्वये विभजति--१. धातुः, २. प्रातिपदिकञ्च । तत्र नाम-अव्यय-उपसर्ग-निपातानां प्रातिपदिकेऽन्तर्भावः । तत्राव्ययनिपातोपसर्गेभ्यः परस्य सुप्रत्ययस्य लुप्यमानत्वात् सुबन्तानामपि तेषां विकारो न दृश्यते ।

**नाम**—कृत्-तद्धित-समासभेदेन त्रिविधम् । शाकटायनः सर्वाणि नामानि धातुभ्य एव सिद्ध्यन्तीति प्रतिपादयति । तथा चोक्तम्—'नाम च धातुजमाह निरुक्तं व्याकरणे शकटस्य च तोकम्' । पाणिनिमते तु सर्वेषां नाम्नां व्युत्पत्तिर्नैव सम्भवति । अतो येषां व्युत्पत्तिः सम्भवति, तानि व्युत्पन्नानि शिष्टानि अव्युत्पन्नानि नामानि । अतएवोच्यते—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति'--महाभाष्ये । एतदेव पाणिनिना 'उणादयो बहुलम्' इति सूत्रेण प्रदर्शितम् ।

धातोर्द्विविधः प्रत्यय उत्पद्यते—तिङ्प्रत्ययः कृत्प्रत्ययश्च । तत्र तिङ्प्रत्ययान्तं क्रियापदमित्युच्यते । तिङ्प्रत्ययान्तेन साध्यरूपा क्रिया उच्यते । तत्र लिङ्गसंज्ञाकारकाद्यन्वयो न भवति । तदुक्तं भर्तृ-

हरिणा—'असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते'। इति वाक्यपदीये। धातोः कृत्प्रत्ययसन्नियोगेन कृदन्तं नाम जायते। तेन च सिद्धरूपा क्रिया उच्यते। यथोक्तं महाभाष्ये—'कृदभिहितो भावो द्रव्यवत् प्रकाशते'। अस्यार्थः—कृदन्तेन अभिहिता क्रिया द्रव्यवत् लिङ्गसङ्ख्याकारकान्वयिनी भवति।

द्वयोर्बहूनां वा नाम्नां योजनेन समाससंज्ञकं नाम निष्पद्यते। समासेन बह्वर्थप्रतिपादनं क्रियते। प्रातिपदिकादपि द्विविधः प्रत्ययो भवति, सुप्प्रत्ययः, तद्धितप्रत्ययश्च। तत्र सुप्प्रत्ययेन कर्तृकर्माद्यर्थाः प्रतिपाद्यन्ते।

तद्धितेन तु अपत्यः विकार-प्रभृतयोऽर्थाः प्रतिपाद्यन्ते। तद्धितप्रकरणस्य विस्तृतत्वात् तदध्ययने वैयाकरणानां विशेषतोऽध्यवसायो न दृश्यते। प्रसिद्धश्च 'तद्धिते मूढो वैयाकरणः'। इदं तद्धितपाठवैमुख्यं चिरात् पराकोटिमाटीकते। तत्र विकारार्थकप्रत्ययपाठेन गुरुशिष्ययोर्विकृतिः सम्पद्यत इत्यपि प्रवादो वैयाकरणसम्प्रदाये प्रसृतः। तस्य शान्तये श्रीमता तैलङ्गान्वयसम्भवेन गङ्गाधरशास्त्रिणा यन्त्रमिदं निर्मितम्। तदिदानीं पाठकक्षेमाय समुद्ध्रियते—

॥श्रीः॥

श्रीमद्गणेशगीर्गुरुभ्यो नमः॥

| | | |
|---|---|---|
| १० ५ | ६ ३ | २३ ४ |
| ८ ३ | श्रीः | ३ १२ |
| ४ १७ | ३ १० | ४ १८ |

श्रीपाणिनये नमः। विघ्नहृदेतद् यन्त्रं '**तस्य विकारे**'ति सूत्रस्य। यश्चैतत्पूजयते तस्य विकारो न जायते देहे ॥ १ ॥ तद्धितपठिताऽवश्यं सत्कतुं यन्त्रमेतदर्हति हि। तद्धितपाठजदोषस्सर्वाऽपि यदीयपूजनान्नश्येत् ॥ २ ॥ पूर्वोद्धृतं यन्त्रमिदं प्रकाशितं गङ्गाधरेणेह परोपकर्त्रा। रसाक्षिनागैकमिते हि वैक्रमेऽब्दे राधषष्ठ्यर्कदिने प्रयत्नात् ॥ ३ ॥

---

## सारस्वतव्याकरणम्

अयं प्रकृतेर्नियमो यत् समये समये प्राचीनानां ह्रासः, नवीनानां प्रादुर्भावपूर्वको विकासो भवत्येव। एतादृशी एव स्थितिः समस्तवाङ्मयस्यापि श्रूयते, दृश्यते सर्वैरनुभूयते च, किन्तु सारस्वतव्याकरणस्य प्रादुर्भावसम्बन्धे एका विलक्षणा किंवदन्ती गुरुपरम्परया ज्ञायते किंवा इतिहासविषयकग्रन्थानां पर्यालोचनेनावबुध्यते यद् विविधशास्त्रवेत्ता श्रीमान् **अनुभूतिस्वरूपाचार्यः, पुंसु** इत्यस्य स्थाने **पुंक्षु** इति अपशब्दमुच्चारयामास। उपस्थितैर्विद्वद्भिः स उपहसितः। पण्डितेषु क्रुद्धः स ततो गृहं प्रत्यागत्य अपशब्दस्य साधुत्वसिद्धये सर्वशास्त्रविशारदां शारदां समाराधयामास। तस्याऽऽराधनया प्रसन्ना सरस्वती तस्मै सप्तशत ( ७०० ) सूत्राणि प्रादात्। तान्याधारीकृत्य अनुभूतिस्वरूपः **सारस्वतव्याकरणं** रचयामास। सरस्वतीप्रदत्तसूत्राणां समवायेन रचितत्वादस्यैतन्नाम प्रथितिं प्राप।

यद्यपि सारस्वतव्याकरणस्य प्रथमवृत्तेरन्ते अनुभूतिस्वरूपस्य नामोल्लेखो नास्ति तथापि द्वितीयतृतीयवृत्त्योरन्ते '**अनुभूतिस्वरूपाचार्य विरचिते**' इत्याकारिका पुष्पिका दृशोर्विषयतां याति। तथापि ग्रन्थस्य प्रारम्भिकः श्लोकोऽयं ततो विसङ्गतिं प्रदर्शयति। तत्पद्यं यथा—

'प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये।
सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥'

अनेन सिद्ध्यति यद् अनुभूतिस्वरूपाचार्य एतस्य व्याकरणस्य नास्ति मूललेखकः। अयं तु तद्रचितां प्रक्रियां सरलीचकारेति।

आचार्यः क्षेमेन्द्रः स्वरचितसारस्वतप्रक्रियाया अन्ते एवं निर्दिशति 'इति नरेन्द्राचार्यकृते सारस्वते क्षेमेन्द्रटिप्पणं समाप्तम्'। एतेन प्रतीयते यत् सारस्वतसूत्राणां प्रारम्भिको रचयिता तदन्यो वैयाकिरणः 'नरेन्द्राचार्य' इति। अपरोऽपि **अमरभारती**-नामा व्याख्याकारः सूचयति यत्–

'यन्नरेन्द्रनगरि प्रभाषितं यच्च वैमलसरस्वतीरितम्।
तन्मयात्र लिखितं तथाधिकं किञ्चिदेव कलितं स्वया धिया'॥

विट्ठलोऽपि प्रक्रियाकौमुद्याष्टीकायां नरेन्द्राचार्यं सादरं स्मृतवान्।

**समयः**—अयं हि नरेन्द्रसेनः चान्द्रे, कातन्त्रे, जैनेन्द्रे पाणिनीये च व्याकरणे समधीरासीत्। अस्य समयो वि० सं० ११९० वर्तते।

अयमेव सारस्वतव्याकरणस्य प्रणेता किन्तु तदद्यापि मूलरूपेण न केनापि विदुषा अक्षिलक्ष्यीकृतः। सम्प्रति यत् सारस्वतव्याकरणमुपलभ्यते तस्य प्रथमावृत्तिः, तद्धितभागपर्यन्ता एव। अस्यां प्रथमवृत्तौ ७०० सूत्राणि सन्ति। अत एतेषां रचयिता **नरेन्द्राचार्य** एव भवितुं शक्नोति।

अनेन विवेचनेन एष निष्कर्षः समुपलभ्यते यत् प्रथमो ( ७०० सूत्रात्मको ) भागः नरेन्द्राचार्यरचितः स्यात्, द्वितीयस्य तृतीयस्य च भागस्य कर्ता अनुभूतिस्वरूपाचार्यः स्यादिति। यथा कादम्बर्याः पूर्वार्द्ध-परार्द्धयोः रचयितारौ भिन्नौ तथाप्येकस्य नाम्नैव सा प्रसिद्धा, एवमेव अत्रापि सम्भवेत्। सारस्वतव्याकरणस्यैव परिबृंहितं रूपं सिद्धान्तचन्द्रिका—इति विदुषां सम्मतं मतम्।

## सारस्वतस्य टीकाकाराः

| क्रमः टीकाकारः | टीका | समयः |
|---|---|---|
| १. क्षेमेन्द्रः | टिप्पणम् | १२६० वि०सं० |
| २. धनेश्वरः | टिप्पणखण्डनम् | १२७५ ,, ,, |
| ३. अनुभूतिस्वरूपः | सारस्वतप्रक्रिया | १३०० ,, ,, |

| | | | |
|---|---|---|---|
| ४. अमृतभारती | सुबोधिनी | १५५० ,, | पूर्वं |
| ५. पुञ्जराजः | प्रक्रिया | १५५० ,, | ,, |
| ६. सत्यप्रबोधः | दीपिका | १५५६ ,, | ,, |
| ७. माधवः | सिद्धान्तरत्नावली | १५९१ ,, | ,, |
| ८. चन्द्रकीर्तिः | सुबोधिका | १६०० ,, | — |
| ९. रघुनाथः | लघुभाष्यम् | १६०० ,, | — |
| १०. मेघरत्नः | ढुण्ढिका | १६१४ ,, | पूर्वं |
| ११. मण्डनः | अज्ञाता | १६३२ ,, | ,, |
| १२. वासुदेवभट्टः | प्रसादः | १६३४ ,, | — |
| १३. रामभट्टः | विद्वत्प्रबोधिनी | १६५० ,, | — |
| १४. काशीनाथभट्टः | भाष्यम् | १६७२ ,, | पूर्वं |
| १५. भट्टगोपालः | सारस्वतव्याख्या | १६७२ ,, | ,, |
| १६. सहजकीर्तिः | प्रक्रियावार्तिकः | १६८१ ,, | ,, |
| १७. हंसविजयगणिः | शब्दार्थचन्द्रिका | १७०८ ,, | — |
| १८. जगन्नाथः | सारप्रदीपिका | अज्ञातः | — |

अनुभूतिस्वरूपाचार्यप्रतिनिधिभूतश्रीमज्जयन्तिरामशर्मभ्यः सम्प्राप्तसमस्तज्ञानान् पूज्यश्रीगुरुवर्य्य**लालचन्द्रशर्मणः** सादरं प्रणिपत्तेभ्य एव निवापाञ्जलिरूपोऽयं 'प्रबन्धसङ्ग्रहः' सादरं सश्रद्धश्चोपहियते ब्रह्मानन्दत्रिपाठिना । तथापीदमस्तु—

सारस्वतस्वरूपस्य **श्रीलालचन्द्रशर्मणः** ।
गुरोः सन्तोषपोषाय प्रबन्धः प्रभवेदयम् ॥

---